Check 2012

कविकुलगुरु कालिदास संस्कृत विश्वविद्यालय, रामटेक
हस्तलिखित संग्रह

दाखल क्र M.276. विषय कर्मकांड

नाव. कर्मकांडसमुच्चय (मुद्रित)

लेखक/लिपीकार —

पृष्ठ 36 काळ संवत 1945 पूर्ण/~~अपूर्ण~~

## ॥ अथ कर्मकाण्डसमुच्चयप्रारंभः ॥

॥ अन्त्येष्टी सहित. ॥

श्रीगणेशायनमः ॥ अथकर्मकांडसमुच्चयप्रारंभः ॥ प्रथमदिनकृत्यमाह ॥ अतःपरंप्रवक्ष्यामिक्रियां
प्रेतेविधानकीं। चतुर्णांचैववर्णानांमैत्रेयशृणु अब्रवीत् ॥ १ ॥ ब्राह्मणाः क्षत्रियावैश्याशूद्राश्चैवक्रमे
णतु। विधानंचैवकर्त्तव्यंप्रेतस्यहितकाम्यया ॥ २ ॥ प्रेतः त्रयोदशंपिंडंषोडशंनवमंतथा । एको-
द्दिष्टविहीनःयःप्रेतोदुर्गतिंसोपिगच्छति ॥ ३ ॥ मृत्युस्थानेतथाद्वारिविश्रामेतुचितासने । कुक्षिपिंडंत-
तोदद्यात्पंचपिंडाःप्रकीर्तिताः ॥४॥ मृत्युस्थानेब्रह्मपिंडंविष्णुद्वारेप्रकीर्तितं। विश्रामेरुद्रपिंडंच-
प्रेतायउपतिष्ठतु ॥५ ॥ इत्येवंपंचदेवानांनामोच्चारंप्रकीर्तितं । किमर्थंदक्षिणेदीपंकिमर्थंउत्तरेशिरः
॥ ६ ॥ किमर्थंकुक्षिपिंडंचद्रव्यमाज्यंकिमर्थकं। अंधकारेचदीपोयंमार्गार्थंउत्तरेशिरः ॥ ७ ॥ क्षुधा
र्थंकुक्षिपिंडंचद्रव्यमाज्यंशुचिर्भवेत् ॥८॥ उच्चारः ॥ अमुकगोत्रस्याऽमुकप्रेतस्यमृत्युस्थानेब्रह्मदैव
तएकपिंडोमयादीयतेतवोपतिष्ठतां ॥ १ ॥ अमुकगोत्रस्याऽमुकप्रेतस्यद्वारदेशेविष्णुदैवतएकपिं
डोमयादीयतेतवोपतिष्ठतां ॥ २ ॥ अमुकगोत्रस्याऽमुकप्रेतस्यविश्रामस्थानेरुद्रदैवतएकपिंडोम

यादीयतेतवोपतिष्ठतां ॥ ३ ॥ अमुकगोत्रस्याऽमुकप्रेतस्यचितास्थानेयमदैवतएकपिंडोमयादीय
तेतवोपतिष्ठतां ॥ ४ ॥ अमुकगोत्रस्याऽमुकप्रेतस्यकुक्षिस्थानेप्रेतदैवतएकपिंडोमयादीयतेतवो
पतिष्ठतां ॥५॥ यःकरोतिक्रियांतस्यतदन्हितस्यमुंडनं । तथैवपुत्रदाहेनकेशाश्मश्रुनखानिच ।१।
राजावाराजपुत्रोवाश्रोत्रियोवाबहुश्रुतिः । सर्वान्केशान्समुद्धृत्यछेदयेदंगुलद्वयं ॥२॥ मातापित्रोर्मृ
तेपुत्रोनवपनंकुरुतेयदा । पतंतिनरकेघोरेयावदिंद्राश्चतुर्दश ॥ ३ ॥ यथाचक्रायुधोविष्णुर्यथाशूल
धरोहरः । तथाप्रेतकरेकेशाःस्वग्रासंसुखदायकाः ॥४॥ नोपातिष्ठातितत्सर्वंविनाचमुंडनंशिरः । पुत्रो
वाभ्रातृबंधुर्वादौहित्रःपौत्रकस्तथा ॥ ५ ॥ यस्त्वैतत्कारयेत्कर्मतस्यपुत्रस्यमुंडनं । असगोत्रःसगो
त्रोवास्त्रियोपियदिवापुनः ॥ ६ ॥ प्रथमेहनियोदद्यात्सोवैदद्याद्दशान्हिकं । पुत्रभावेतथापत्नीप
त्न्यभावेसहोदरः ॥७॥ भ्रात्रभावेसगोत्रंस्यादथवाचान्यगोत्रकः । अथवासर्ववर्णानांक्रियालोपंनका
रयेत् ॥ ८ ॥ अनाथप्रेतसंस्कारः कोटियज्ञफलंविदुः । उदकंसततंदद्यात्पिंडमामध्यमेवच ॥ ९ ॥

तस्मात्सर्वप्रयत्नेनतदह्नितस्यमुंडनं ॥ १० ॥ अथभूमिशुद्धिः ॥ प्रथमतःपुत्रोभूमिशुद्धिंकृत्वाप श्चाद्गोमयेनमंडलंकुर्वीत ॥ ततोकाष्ठंनिवेदयेत् ॥ ११ ॥ चितायांआरोप्यकुक्षिपिंडंदद्यात् ॥ दद्या त्पृथक् पृथक् प्रेतंसस्नानंसिद्धिभूषितं नग्नदाहंनकुर्वीतकिंचिद्देयंप्रयच्छनं ॥ १ ॥ प्रथमतोघृतेन मुखाहुतिंदद्याततदनंतरंगंधादिभिरग्निपूजनंकुर्यात्। पश्चात्आहुतींदद्यात् ॥ लोमभ्यः स्वाहा १ त्व चेस्वाहा २ लोहितायस्वाहा ३ मेदोभ्यः स्वाहा ४ मांसेभ्यः स्वाहा ५ स्नावभ्यः स्वाहा ६ अस्थि भ्यः स्वाहा ७ मज्जभ्यः स्वाहा ८ रेतसेस्वाहा ९ वायवेस्वाहा १० अयासायस्वाहा ११ प्रयासाय स्वाहा १२ सय्यासायस्वाहा १३ विजासायस्वाहा १४ द्यायासायस्वाहा १५ शुचेस्वाहा १६ सो चतेस्वाहा १७ सोचमानायस्वाहा १८ सोकायस्वाहा १९ तपतेस्वाहा २० तप्यतेस्वाहा २१ तप्यमानायस्वाहा २२ तप्तायस्वाहा २३ धर्मायस्वाहा २४ यमायस्वाहा २५ अंतकायस्वाहा २६ मृत्यवेस्वाहा २७ ब्रह्मणेस्वाहा २८ ब्रह्महत्यायैस्वाहा २९ विश्वेभ्योदेवेभ्यः स्वाहा ३०

द्यावापृथिवीभ्यांस्वाहा ३१ ततः प्रदक्षिणांकृत्वा ॥ क्रव्यादायनमस्तुभ्यंचितासप्तप्रदक्षिणाः । प्र
क्षिप्यसप्तसमिधः क्रियाकृत्वाप्रदक्षिणाः ॥ ततः शिरः स्थानेवह्निंप्रज्वालयेत् सर्वांगानिदहेत्तत्र अ
र्धशिंचपृथक्पृथक् ॥ २ ॥ नचप्रज्वालितोवह्निः सर्वभागेषुसंस्कृतः ॥ ततोजनपदैः सर्वैर्दातव्यं
करताडनं ॥ ३ ॥ विष्णुरितिब्रुयात् कृत्वादौमृदुभक्षकः चालयेत्स्फोटयेत्मूर्ध्नितततोगछेज्जलाशयं
॥ ४ ॥ तदान्हिसर्वभृत्येषुसचैलोजलमाविशेत् यत्रयत्रस्थिताश्चैवपरिपूर्णेनवारिणा ॥ ५ ॥ सचै
लस्नानंकुर्वीत नदीकूपतडागके ॥ एकांजलिः प्रदातव्याजातिगोत्रसुतोदशः ॥ १ ॥ अमुकगोत्र
स्याऽमुकप्रेतस्य असद्गतिनिवार्णार्थंसद्गतिप्राप्त्यर्थंएषतिलतोयांजलांजलिर्मयादीयतेतवोपतिष्ठ
तां अतसीपुष्पसंकाशंइतिस्मृत्वाततस्वःस्थानंगच्छेत्मुखे १ चक्षु २ सुकर्णाभ्यां ३ नाशाय ४
हृदयेनच ५ इतिपंचप्राणान्मुखाहुतिंदद्यात् क्षिप्रेघुलितयेद्वंधंतोयंमूर्ध्निप्रपद्ध्येत् ततस्तेनविधा
ननयेज्ञोपवीतभूषणं ॥ १ ॥ मध्यान्हात्परतः गोग्रासंदद्यात्सायंकालेदिनत्रयपर्यंतंदुग्धश्राद्धकुं

र्यात् अमुकगोत्रस्याऽमुकप्रेतस्यनीरक्षीरमयादीयतेतवोपतिष्ठतां ॥ श्मशानानलदग्धोसपिरि
त्यक्तोसिबांधवैः इदंनीरमिदंक्षीरमत्रस्नाहिइदंपिब ॥ हरिंस्मरेत् ॥ इतिप्रथमदिनकृत्यं अथअ
स्थिसंचयश्राद्धं श्मशानभूमिंगत्वास्नानंकृत्वा अपसव्यंऊर्णासूत्रेणवेष्टयेत् पवित्रीपरिधानं अथप्र
तिज्ञा अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमुक्त्यर्थंविष्णुलोकप्राप्तये अस्थिसंचयश्राद्धमहंकरिष्ये
श्मशानवासिभ्योमाषादिबलिंदद्यात् चतुर्दिक्षुबलीन्दद्यात् यमायत्वेतिमंत्रेण अनुक्रमः प्रेताजयता
नरः इंद्रोवेतिमंत्रेणदिशिदिशिमंत्रंपठेत् अस्थीनिकुंकुमेनार्चयेत् । ततः प्रदक्षिणात्रयंकुर्यात् पश्चा
त्शिरःप्रभृतिअंगुष्ठतर्जनीगृहीत्वापलाशपत्रेस्थाप्यदुग्धेनप्रोक्ष्यवाजलेनस्नापयेत् मृण्मयेपात्रे
स्थाप्यपश्चात्श्राद्धत्रयंकुर्यात् चितास्थानेदक्षिणाभिमुखः त्रिकोणंस्थंडिलंकृत्वागोमयेनोपलिप्य
प्रतिज्ञाअमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थंचितास्थानेश्राद्धमहंकरिष्ये ततोरेषात्रयकरणं
उदकृदर्भेनप्रोक्षणं अमुकगोत्रस्यामुकप्रेतस्यचितास्थानेउत्तरपार्श्वेदर्भासनंमयादी० अमुकगो०

अ० प्रे० प्रेतत्वनिवृ० असद्गतिनिवा० उत्तरपार्श्वेस्मशानवा० एकपिंडोमयादीयते तवोपतिष्ठतां पिंडप्रत्यवनेजलंमृन्मयंदंतकाष्ठंऊर्णासूत्रं भृंगराजपुष्पंउशीरिचंदनं धूपं दीपं नैवेद्यं पूगीफलं दाक्षिणामद्दत्तंतवोपातिष्ठतां १ अमुकगोत्रस्यामुकप्रेतस्य चितास्थानेमध्यपार्श्वेदर्भासनमयादयितेतवो० अमुकगोत्रस्य अमुकप्रे० प्रेतत्वविमुक्त्यर्थंस्वर्गलोकप्राप्तयेश्मशानवासिभ्योमध्यपार्श्वेएकपिंडोमयादी० पिंडप्रत्यवनेजलंमृन्मयंदंतकाष्ठंऊर्णासूत्रं भृंगराजपुष्पंउशीरचंदनंधूपंदीपं नैवेद्यंपूगिफलंदक्षिणामद्दत्तंतवो० २ अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वाविमु० चितास्थानेदक्षिणपार्श्वेद-र्भासनंमया० अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्ववि० विष्णुलोकप्राप्तयेश्मशानवासिभ्यःदक्षिणपार्श्वे एकपिंडोमयादीयतेत० पिंडप्रत्यवनेजलंमृन्मयंदंतकाष्ठंउर्णासूत्रंभृंगराजपुष्पंउशीरचंदनंधूपंदीपं नैवेद्यंपूगीफलंदक्षिणामद्दत्तंतवो० ३ अमुकगोत्रस्यामुकप्रेतस्यतृषानिवारणार्थंइमंजलमयादीय-ते० पश्चाद्भस्मस्थानेत्रिकुटिंघृत्वातदुपरिकुंभंघृत्वाततःसिद्धान्नंतंदुलदधिघृतशर्कराभिर्बलिंदद्या-

अ० त् अमुकगोत्रस्यअमुकप्रे० क्षुधानिवारणार्थइमंसिद्धान्नमदः इमंजलंमद्दत्तंत ०अतसीपुष्पसंकाशं स०
पीतवासंजनार्दनं ॥ येनाभ्यार्चितगोविंदोनतस्यविद्यतेभयं ॥ १ ॥ अनादिनिधनोदेवःशंखचक्रग
४ दाधरः ॥ अव्ययःपुंडरीकाक्षःप्रेतमोक्षप्रदोभव २ पश्चादुत्तरदिशिपंचदशपदानि १५ गत्वाअ-
स्थिसंचयश्राद्धनिमित्तंभूमिखननंअस्थिनिधृत्वातदुपरिगोमयेनोपलेपनं अथप्रतिज्ञा अमुकगो०
अमुकप्रे० प्रेतत्वनिवृत्तिपूर्वकविष्णुलोकप्राप्तयेअस्थिसंचयश्राद्धमहंकरिष्ये उदकदर्भप्रोक्षणंअव
नेजलं अमुकगो० अमुकप्रे० तारणायअस्थिसंचयश्राद्धनिमित्तंदर्भासनंमद्दत्तंतवो० अमु० गो०
अमु० प्रे० तारणायअस्थिसंचयश्राद्धनिमित्तंपिंडोमयादीयते०पिंडप्रत्यवनेजलंमृन्मयंदंतधावनंगं
धंउशीरचंदनंभृंगराजपुष्पंऊर्णासूत्रंधूपंदीपंनैवेद्यंमुखवासंमुद्रामद्दत्तंतवो० प्रार्थना अतसीपुष्पसं ४
काश० इति अनादिनिधनोदेवेतिप्रार्थना पश्चादुद्धृत्यवस्त्रेस्थाप्यकुंकुमेनार्च्यःसुवर्णादिघृत्वामृग
चर्मादिनावेष्टचस्वकंठेधारयेत् अनेनमंत्रेणश्रीगंगांप्रस्थाप्य त्रिसमुद्रात्समसृ पतत्स्वगानपांपतिवृ-

षभद्रकाष्ठानांमुत्रपुरीषावसानंसुकृतस्यलोकेतत्रगच्छ यत्रपूर्वेप्रेतः तृतीयदिनपूरकश्राद्धंयत्कृतंत
न्न्यूनातिरिक्तंतत्स ० ब्राह्मणवचनात्तीर्थजलप्रसादान्महाविष्णुप्रसादात् तृतीयदिनपूरकश्राद्धंसंपूर्णं
भवतु ॥ यावदस्थिमनुष्यस्यगंगातोयेनिमज्जति ॥ तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ॥ १ ॥
अंतर्दशाहंयस्यास्थिगंगातोयेनिमज्जति ॥ नतस्यपुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥ २ ॥ इत्यस्थि
संचयश्राद्धंसमाप्तमगमत् ॥ अथदशगात्रविधिः प्रतिज्ञाक्रियाकर्तास्नात्वाचम्यधौतवस्त्रपरिधानंत
तोऽपसव्यंईशानादिचरुंश्रपयित्वादक्षिणाभिमुखोभूत्वाकालज्ञानंस्मृत्वा अनेनवाक्येनसव्यं अ-
द्यब्रह्मणेत्यादि अमुकमासेऽमुकपक्षे अमुकतिथौ अमुकवासरेऽपसव्यं अमुकगोत्रस्य अमुकप्रे०
प्रेतत्वविमुक्तयेउत्तमलोकप्राप्त्यर्थं प्रथमेहनिमित्तंपूरकश्राद्धमहंकरिष्ये इतिप्रतिज्ञा ॥ पूर्वेकौशि
कब्राह्मणंनिधायपूरकश्राद्धे अमु ० गो ० अमु ० प्रे ० प्रेतत्वनिवृत्तयेविश्वादिपितृलोकप्राप्त्यर्थंकौशि
कब्राह्मणायपाद्यमुपतिष्ठतु अर्घ्यमुपतिष्ठतुआचमनमु ० आच्छादनमु ० स्नानमु ० चंदनमु ० ति-

लयवाक्षतमु० पुष्पमु० धूपमु० दीपमु० नैवेद्यमु० तांबूलमुप० पूगीफलमु० दक्षिणामु० अमु-
कगोत्रस्याऽमुकप्रेतस्यप्रेतत्वविमुक्तये कौशिकब्राह्मणायसोपस्करंयथाशक्त्यामयादास्यमानमिद
मामान्नमुपतिष्ठतु एवंकौशिकब्राह्मणंसंपूज्य नापरंयात्राचारस्तत्राप्येवमेवब्राह्मणपूजनंकर्तव्य-
मिति ॥ तत्रपिंडदानार्थंदक्षणस्यांदिशिवेदिकाकरणीयंवामंडलाकारंगर्तें रेषाकरणंउदकेनप्रोक्षणं
दर्भानास्तीर्य अमुकगो० अमुकप्रे० प्रेतत्वविमुक्तयेअवनेजनंमयादीयतेत० अमुकगो०अमुकप्रे०
कुशासनंमयादीयतेत० ततःपिंडमादाय अमुकगो० अमुकप्रे० तारणायरौरवनरकनिवारणायप्र-
थमेहनिशिरः पूरकपिंडोमयादीयतेतवो० अमुकगो० अमुकप्रे० पिंडप्रत्यवनेजलंमयादीयतेत०
ऊर्णासूत्रमंत्रः सिशेनतंत्रवसामनीषिणऊर्णासूत्रेणकवयोवयंति अश्विन्यायज्ञंपठित्वाकेचिन्मतेकु-
तश्राद्धेमंत्रंचइति अमुकगो० अ०प्रे०लोमसंभवार्थमूर्णासूत्रंमदत्तंत०दालभ्यः दिनेदिनेतुदातव्यं
मृन्मयंदंतधावनं अमु०गो० अमुकप्रे० हस्तशुद्धिक्रियमाणायमृन्मयमदत्तंत० अमु०गो० अमु-

कप्रे० मुखशुद्धिक्रियमाणायदंतधावनंम०अमुकगो० अमु० प्रे० स्नानंम० अमु० गो० अमु० प्रे०
चंदनंमयादी० अ०गो० अ० प्रे० तीलजलम०अमु० गो० अमु०प्रे० उसीरचंदनंम० अमुकगो०
अमु० प्रे० नासिकासुगंधंम० अमु० गो० अमु० प्रे० देवपुष्पंम० अमु०गो० अमु० प्रे० इंद्रज-
वंम० अमु० गो० अमु० प्रे० कर्पूरकाचरिम० अमु० गो० अमु० प्रे० खर्जूरम० मुअ० गो०अमु०
प्रे० भृंगराजपुष्पंम० अमु० गो० अमु० प्रे० धूपंम० अमु० गो० अमु० प्रे० अंधतमनिवारणार्थं
दीपंम० अमु० गो० अमु० प्रे० नैवेद्यंम० अमु० गो० अमु० प्रे० मुखवासंम० अमु० गो० अ०
प्रे० पूगीफलंम० अमु० गो० अमु० प्रे० द्रव्यंम० ॥ अथपिंडार्चनसंकल्पः गंधपुष्पधूपदीपनैवे
द्यतांबूलपूगीफलदक्षिणादियद्दत्तंत० अमु० गो० अमु० प्रे० इदंतिलतोयपात्रंम० अमु० गो०
अमु० प्रे० वंशवृद्ध्यर्थंनीरक्षीरपात्रंम० एकंनीरपात्रंएकंक्षीरपात्रंम० श्मशानानलदग्धोसिपरि-
त्यक्तोसिबांधवैः ॥ इदंनीरमिदंक्षीरमत्रस्नाहीत्विदंपिब ॥१॥ धूपंदेहिदीपंपश्य अमु० गोत्र०

द० अमु० प्रे० एषोवर्द्धमानजलांजलिर्म० पिंडविसर्जनं आसनादुत्थापनांतरेप्रथमदिनपूरकश्राद्धंकृ वि०
त्वा अस्यविधेर्यन्न्यूनमतिरिक्तं तत्सर्वंब्राह्मणवचनात्तीर्थजलप्रसादात्प्रथमदिनकृतपूरकश्राद्धंवि-
६ धिवत्संपूर्णंभवतु॥अतसीपुष्पसंकाशंपीतवाससंजनार्दनम्।येनमस्यंतिगोविंदंनतेषांविद्यतेभयं॥१॥
अनादिनिधनोदेवशंकचक्रगधाधर ॥अव्ययः पुंडरीकाक्षप्रेतमोक्षप्रदोभव ॥२॥ काकबली अमु०
गो०अमु०प्रे० काकबलिम० काकत्वंयमदूतोसिगृहाणबलिमुत्तमम् ॥यमद्वारगतंप्रेतंत्वमाप्यायतुमर्ह
सि १ इतिप्रथमादिनकृत्यं॥ अथनवकश्राद्धं अमु० गो० अमु० प्रे० तारणायपूयफेननरकनिवारणा
यद्वितीयेऽन्हिकर्णाक्षिमुखनासिकापूरकपिंडोमयादीयतेत० २ अमु० गो० अमु० प्रे० तारणाय
हाहारौरवनरकनिवारणायतृतीयेऽन्हिगलभुजवक्षस्थलपूरकपिंडोम० ३ अमु० गो० अमु० प्रे० ६
तारणायतामसनरकनिवारणायचतुर्थेऽन्हिनाभिइंद्रियगुदानिपूरकपिंडोम० ४ अमु० गो० अ
मु०प्रे० तारणाय अंधतमनिवारणायपंचमेऽन्हिजंघौचरणौपूरकपिंडोम० ५ अमु० गो० अमुकप्रे०

तारणायतामसनरकनिवारणाय षष्ठेऽन्हिसर्वमर्माणिपूरकपिंडोम० ६ अमु० गो० अमु० प्रे०
अमेध्यनरकनिवारणायसप्तमेऽन्हिसर्वगात्रनाडिकापूरकपिंडोम० ७ अमु०गोत्रस्य अमु०प्रे० ता
रणायपूरीषभक्षणनरकनिवारणायअष्टमेऽन्हिदंतनखलोमानिपूरकपिंडोम० ८ अमु० गो० अमु०
प्रे० तारणायकृमिभक्षनरकनिवारणायनवमेऽन्हिबलवीर्यसंभूतपूरकपिंडोम० ९ अमु० गोत्रअ
मु० प्रे० तारणायकुंभीपाकनरकनिवारणायदशमेऽन्हिसर्वशरीरसंभवक्षुत्पिपासानिवारणार्थंपूर
कपिंडोमयादीयतेतवोपतिष्ठतां ॥ १० ॥ इतिदशगात्रविधिः ॥ ततःएकादशेऽन्हिदिनेनाराय
णबलिंकुर्यात्॥अथसपिंडनश्राद्धप्रयोगः तत्रचाधुनिकाः। प्रेतश्राद्धातिरिक्तश्राद्धचतुष्टयमपात्रक
मेवकुर्वंतीतितथैवलिख्यते। तत्रपूर्वदिनेनिरामिषमेकवारंभुक्त्वारात्रौसर्वभुक्तजनगृहेविप्रनिवेशनं
गत्वादक्षिणप्लवगोमयोपलिप्तायांभूमावाचान्तउपविश्यब्राह्मणंउदङ्मुखमुपवेश्यकृतापसव्यःपुष्प
चंदनतांबूलानिब्राह्मणकेरदत्वादीक्षणकरेणब्राह्मणजानुस्पृष्ट्वा ॐअस्यांरात्रावमुकगोत्रस्यापितुरमु

स० क्प्रेतस्यश्वः सपिंडीकरणश्राद्धकरणायभवंतंब्राह्मणमामंत्रयेइत्यामंत्रणंकुर्यात् आमंत्रितोस्मीति श्रा०
प्रतिवचनं ततः अक्रोधनेनेत्यादि ॐसर्वायासविनिर्मुक्तेनकामक्रोधविवर्जितेनभवितव्यंभवतानः
७ श्वस्तनेश्राद्धकर्मणिइतिब्राह्मणंनियमान्श्रावयेत् यद्यविघ्नेनरजनीयास्यतितदासर्वमेतत्करिष्या
मीतितत्प्रतिवचनम् ततोऽग्रिमदिनेप्रातः श्वेतवस्त्रयुग्मेनस्नात्वामध्यंदिनेपुनः स्नात्वाकृतनित्य
क्रियः श्राद्धकर्ताश्राद्धनिषिद्धेतरवेलायांगोमयोपलिप्तायांवृतपाकस्थानेतिलान्विकीर्यपरितश्छा
गान्बंधयित्वासपिंडद्वारानूतनभाण्डैः स्वयंवापाकमारभेत् श्राद्धभूमिंपंचगव्येनोपलिप्यज्वल
दंगारैः संशोध्यगौरमृत्तिकयाच्छाद्यतिलैः सर्षपैश्चविकिरेत् द्विजंकारितश्मश्रुनखछेदनमभिगम्य
दंतधावनं ताम्रपात्रेतैलोद्वर्तनान्युपनीयस्नानार्थदत्तजलंतंस्नातंयजमानसवर्णेनाहूतमाचांतंमध्या ७
न्हेशुचिराचांतः शुक्लद्विवासाउपविश्यगोमयोपलिप्तायांभूमौवामावर्तेनकृतगोमूत्रमंडलायां ॐभू
म्यैनमः इत्यक्षतपुष्पैस्त्रिरर्चयित्वाभूमौकुशत्रयमास्तीर्य्यतदुपरितिष्ठन् स्वागतमितिस्थितंब्राह्म

णंपृच्छेत् सुस्वागतमितितेनोक्ते ॐइदंतेपाद्यमित्युपनीयविनीतःसन्पुनःपुनरभिनंद्यपात्रंब्रा
ह्मणपादौप्रक्षालयेत् ततःपुटकेऽर्घ्यंकृत्वादक्षिणाभिमुखोऽपसव्यंकृत्वामोटकादिकमादायार्घ्यपा
त्रंवामहस्तेकृत्वा अद्यामुकगोत्रपितरमुकप्रेतसपिण्डीकरणश्राद्धएषपादार्घस्तेमयादीयतेतवो
पतिष्ठतामितिपादार्घ्यंदद्यात् । ततआचमनीयजलंपात्रस्थमभिनीयशिरसाभिवंद्यजानुनीविश्रा
व्य इदंतेआचमनीयमित्याचमनीयजलंब्राह्मणायदत्वास्वयंपादौप्रक्षाल्याचम्य तमाचमय्याग्रे
कृत्वाश्राद्धदेशमागच्छेत् पूर्वरात्रौनिमंत्रणासंभवेतस्मिन्नेवाह्निश्राद्धवेलायांपूर्वोक्तविशेषणविशि
ष्टंयजमानसवर्णेनाहूतंपूर्ववत्कृतगोमूत्रमंडलायांभूमावुभावप्युपविशेतां ततःश्राद्धकर्ता ॐइदंते
पाद्यमुपनीयविनीतःपुनःपुनरभिनंद्यपात्रंब्राह्मणपादौप्रक्षालयेत् ततोऽपसव्यंकृत्वापुष्पचन्दनतां
बूलानिविप्रकरेदत्वाब्राह्मणजानुदक्षिणहस्तेनस्पृष्ट्वा अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिण्डी
करणश्राद्धकरणायभवंतंब्राह्मणमहमामंत्रयेइत्यामन्त्र्यआमंत्रितोस्मीतितेनोक्ते अक्रोधनेनेत्यादि

नासर्वायासविनिर्मुक्तेनेत्यादिनाचब्राह्मणंनियमान्श्रावयेत् भवितव्यमितितेनोक्ते अर्घ्यंपरिकल्प्य
वामहस्तेकृत्वामोटकादिकमादाय अद्यामुकगोत्रपितरमुकप्रेतसापिण्डीकरणश्राद्धेएषपादार्घस्तेम
यादियतेतवोपतिष्ठतामितिपादार्घंदद्यात् ततआचमनीयजलंपात्रस्थंशिरसाभिवंद्यजानुनीविश्रा
व्य ॐइदंतेआचमनीयमितिब्राह्मणायदत्वासव्येनस्वयंपादौप्रक्षाल्याचम्य तमाचमय्याग्रेधृत्वा
श्राद्धदेशमागच्छेत् । तत्रप्राङ्मुखउपविश्यसिद्धमितिपृष्ट्वाऽत्रनिषीदस्वेतिब्राह्मणमुदङ्मुखमुपवे
शयेत् द्विजपादयोस्तलेकुशान्दद्यात् आसनसमीपेतिलतैलेनदीपंप्रज्वाल्यस्थापयेत् अन्यांश्चप्र
त्यासनसमीपेतिलतैलेनचतुरोदीपान् स्थापयेत्ब्राह्मेणनदीपरक्षार्कतव्यारक्षोघ्नान्गौरसर्षपांस्ति
लान्श्राद्धदेशेसंनिधापयेत् काककुक्कटादीन्श्राद्धहंतॄनपसारयेत् ततः अपवित्रःपवित्रोवेत्यादिपठि
त्वापुण्डरीकाक्षः पुनात्वितिश्राद्धीयद्रव्याणिचात्मानंकुशत्रयेणसिंचयेत् ।ततः कुशत्रयतिलजलान्या
दाय आद्यामुकगोत्रस्यपितुरमुकप्रेतस्यप्रेत्वविमुक्तिहेतुषोडशश्राद्धांतर्गतसपिण्डीकरणश्राद्धमहंक

रिष्येइतिसंकल्पंकुर्यात् कुरुष्वेतिब्राह्मणोवदेत् गायत्रीजपमहंकरिष्येइतिब्राह्मणंपृच्छेत् कुरुष्वेति
तेनानुज्ञातःप्रणवव्याहृतिसंहितागायत्रींत्रिर्जपेत् ततोदेवताभ्यइतित्रिर्जपेत् ततोदेवश्राद्धार्थोप
कल्पितासनादिदेशमागत्योदङ्मुखउपविश्यकुशत्रय यवजलान्यादाय ॐअद्यामुकगोत्रस्यापितुर
मुकप्रेतस्यसपिंडीकरणनिमित्तकामुकगोत्रपितामह प्रपितामह वृद्धप्रपितामहामुकामुकशर्मश्रा
द्धसंबंधिनोविश्वेदेवाइदमासनंवोनमइतिपूर्वाग्रंकुशत्रयरूपंसजलयवप्रोक्षितमुत्सृजेत् विश्वान्देवा
नहमावाहयिष्येइत्युक्त्वा ॐविश्वेदेवासऽआगतशृणुतामऽइम हवएदंबर्हिर्निषीदतेत्यावाह्य ॐ
यवोसियवयास्मद्द्वेषोयवयारातिरितियवान्विकीर्य ॐ विश्वेदेवाः शृणुतेमऽइम हवंमेयेअंतरिक्षेय
उपद्यविष्ठ येऽअग्निजिव्हाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषिमादयध्वं ॥ ॐ आगच्छंतुमहाभा
गाविश्वेदेवामहाबलाः । येयत्रयोजिताःश्राद्धेसावधनाभवंतुतेइतिपठेत् ॥ ततः पुटकेपूर्वाग्रंपवित्रं
धृत्वा ॐ शन्नोदेवीरभिष्टयआपोभवंतुपीतये। शंयोरभिस्रवंतुनइतिजलंक्षिप्त्वा ॥ ॐ यवोसीतिय

स०

वान्प्रक्षिप्य गंधपुष्पेतूष्णींतत्रप्रक्षिप्य अर्घपात्रंवामहस्तेकृत्वापवित्रंभोजनपात्रेपूर्वाग्रंधृत्वातदुप रिकिंचिदुदकांतरंदत्वा ॥ॐ यादिव्याआपः पयसासंबभूवुर्याऽअंतरिक्षाऽउतपार्थिवीर्याः ॥ हिर

९ ण्यवर्णाययज्ञियास्तानऽआपः शिवाः स२स्योनाः सुहवाभवन्त्वितिपाठित्वाकुशत्रययवजलान्यादा य अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकामुकगोत्र पितामहप्रपितामाहवृद्धप्रपि तामहामुकामुकशर्मश्राद्धसंबंधिनोविश्वेदेवाएषवोहस्तार्घोनम इतिपवित्रोपरिअर्घजलमुत्सृजेत् । ततः पवित्रसहितमर्घपात्रमासनदक्षिणपार्श्वे ॐविश्वेभ्योदेवेभ्यस्थानमसीतिविश्वेदेवार्घपात्रमुत्ता नंस्थापयेत्ततः कुशत्रययवजलान्यादायअद्यामुकगोत्रस्य पितुरमुकप्रेतस्यसपिंडीकरणनिमित्त कामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्मश्राद्धसंबंधिनोविश्वेदेवा एतानिगंधपु ष्पधूपदीपतांबूलयज्ञोपवीतवासांसिवोनमइतिगंधादीनुत्सृजेत् ततोभोजनपात्रासनयोश्चतुर्दिशंज लेनचतुष्कोणमडंलंकृत्वा अपसव्येनमोटकादिकमादायातिलघृतव्यंजनयुतमन्नं ॐइदमन्नंएतद्भु

श्रा०

९

स्वामिपितृभ्योनमइतिदक्षिणमुखमुत्सृजेत् ततःसव्यंकृत्वाताम्रपात्रादिकंगृहीत्वातेनान्नमादायम
नाकूस्थित्वादेवान्ध्यायन् पात्रेपरिविष्यात् व्यंजनानिघृतंजलंचतत्रोपनीयान्नोपरिमधुदत्वा ॥
ॐमधुवाताइतित्र्यृचा॥ॐमधुमधुमध्वितिमंत्रैरन्नमभिमंत्रयेत् ततऋजुहस्ताभ्यामन्नपात्रमालभ्य
पृथ्वीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेअमृतंजुहोमिस्वाहा॥ॐइदंविष्णुर्विचक्रमेत्रेधानिद
धेपदं । समूढमस्यपा ँसुरेइतिचपठित्वा ॥ ॐकृष्णकव्यमिदंरक्षमदीयमितिपठित्वा ॐइदमन्न
मित्यन्ने ॐइमाआपइतिजलेइदमाज्यंइति घृते इदंहविरितिपुनरन्नेदक्षिणकरांगुष्ठमावेश्य ॐयवो
सीत्यन्नोपरियवान्निक्षिप्य कुशत्रययवजलान्यादाय अद्यामुकगोत्रस्यापितुरमुकप्रेतस्यसपिंडीकरण
निमित्तकामुकगोत्रपितामहप्रपितामह वृद्धप्रपितामहानाममुकामुकशर्मणांश्राद्धसंबंधिनोविश्वेदेवा
एतद्वोन्नंसोपकरणंनमइत्यन्नमुत्सृजेत् एवंदेवकांडंनिर्वर्त्य हस्तौपादौप्रक्षाल्यकुशवटुकादिकंपुनर्गृ
हीत्वाप्रेतश्राद्धदेशमागत्योपविश्यअपसव्यादिकृत्वादक्षिणाभिमुखोमोटकादीन्यादायअद्यामुकगो

स० त्रपितुरमुकप्रेतसपिंडीकरणश्राद्धइदमासनंतेमयादीयतेतवोपतिष्ठतामितिपित्रेआसनंमोटकरूपंति श्रा०
लजलप्रोक्षितमुत्सृजेत् पुनर्मोटकादिकमादाय अद्यामुकगोत्रस्यापितुरमुकप्रेतस्यसपिंडीकरणनिमि
१० त्तकश्राद्धेऽमुकगोत्रस्यपितामहस्याऽमुकशर्मणइदमासनंतेस्वधा इतिस्थानत्रयेक्लृप्तासनेषुसर्वप
श्चिमस्थानस्थितमासनंपितामहायोत्सृजेत् । पुनर्मोटकादीन्यादायअद्यामुकगोत्रस्यापितुरमुकप्रेत
तस्यसपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्रस्यप्रपितामहस्यामुकशर्मणइदमासनंतेस्वधा इतिमध्य
मासनंप्रपितामहायोत्सृजेत् पुनर्मोटकादिकमादाय अद्यामुकगोत्रस्यापितुरमुकप्रेतस्यसपिंडीकर
णनिमित्तकश्राद्धेऽमुकगोत्रस्यवृद्धप्रपितामहस्यामुकशर्मणइदमासनंतेस्वधेतिसर्वत्रपूर्वमासनंवृद्ध
प्रपितामहायोत्सृजेत् ततःपितामहादीनुद्दिश्य पितॄनहमावाहयिष्यइत्युक्त्वा ॐउशंतस्त्वा १०
निधीमह्युशन्तःसमिधीमहि । उशन्तुशतऽआवहपितॄन्हविषेऽअत्तवइतिपितामहादीनावाह्य
ॐअपहतेत्यादिउभयत्रश्राद्धस्थानेतिलान्विकीर्य ॐ आयन्तुनःपितरइत्यादिमंत्रंजपेत्

ततोऽर्घपात्रचतुष्टयेऽनखच्छिन्नंदक्षिणाग्रंपवित्रंप्रत्येकं धृत्वा ॐशन्नोदेवीरितिप्रत्येकंजलं क्षित्वा ॐतिलोसीतिस्वाहांतेनमंत्रेणप्रत्येकंतेष्वेवतिलान्प्रक्षिप्य गंधपुष्पेतेष्वेवतूष्णींप्राक्षि प्य प्रेतार्घपात्रंवामहस्तेकृत्वा पवित्रंपात्रंब्राह्मणकरे उत्तराग्रंधृत्वा तदुपरिकिंचिज्जलांतरंद त्वा ॐयादिव्याआपइतिपठित्वामोटकादीन्यादाय अद्यामुकगोत्रपितरमुकप्रेतसपिण्डी करणश्राद्धेएषहस्तार्घस्तेमयादीयतेतवोपतिष्ठतामितिपात्रब्राह्मणहस्तेपवित्रोपरि अर्घजलंददद्उ त्सृजेत् अवशिष्टजलसहितार्घपात्रंब्राह्मणाग्रेनिदध्यात् पितामहार्घपात्रंवामहस्तेकृत्वापवित्रं भोजनपात्रेधृत्वातदुपरिजलांतरंदत्वा ॐयादिव्याइत्यादिपठित्वामोटकादीन्यादाय अद्या मुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्रपितामहाऽमुकशर्मन्नेषतेहस्ता र्घः स्वधेतिपूर्ववदर्घंदद्यात् अवशिष्टलयुतमर्घपात्रमग्रेधारयेत् ततःप्रपितामहार्घपात्रंवामहस्ते कृत्वापवित्रंभोजनपात्रेधृत्वातदुपरिजलांतरंदत्वा ॐयादिव्याइत्यादिपठित्वामोटकादीन्यादाय

 अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तक श्राद्धेअमुकगोत्रप्रपितामहाकमुशर्मन्नेष 
तेहस्तार्घःस्वधेत्यर्घंददत्पूर्ववदुत्सृजेत् तदर्घपात्रंअवशिष्टजलयुतंअग्रेस्थापयेत् तृतीयार्घपात्रं
 वामहस्तेकृत्वापवित्रंभोजनपात्रेधृत्वातदुपरिजलांतरंदत्वा ॐयादिव्याइतिपठित्वा मोटकादी
न्यादाय अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्रवृद्धप्रपितामहा
मुकशर्मन्नेषतेहस्तार्घःस्वधेतिपूर्ववदर्घमुत्सृजेत् अवशिष्टजलयुतार्घपात्रमग्रेस्थापयेत् ततःसव्यं
कृत्वाआचम्य अपसव्यंकृत्वा पुटकत्रयमग्रेधृत्वाप्रेतार्घपात्रंगृहीत्वा ॐयेसमानाःसुमनसः पि
तरोयमराज्ये तेषांलोकऽस्वधानमोयज्ञोदेवेषुकल्प्यताम् येसमानाःसुमनसोजीवाजीवेषुमामकाः
तेषा २ श्रीर्मयिकल्प्यतामास्मिल्लोकेशत २ समाइतिमंत्राभ्यांप्रेतार्घपात्रस्थजलतृतीयभागंपुट 
कांतरेधृत्वा पुनरापेमंत्रद्वयंपठित्वाऽपरतृतीयभागंपुटकांतरेधृत्वा प्रेतार्घपात्रस्थतृतीयभागज
लंपुटकांतरेधृत्वा तूष्णींप्रथमपुटकस्थाविभक्तजलतृतीयभागं धृत्वाप्रेतार्घपात्रेकृत्वापवित्रपुष्पस

हितं प्रेतार्घपात्रमादाय ॐयेसमानाइतिमंत्रद्वयेनप्रेतार्घपात्रस्थतृतीयभागजलं पितामहार्घपा
त्रस्थजलेमेलयेत् एवमपरपुटकास्थितार्घतृतीयभागद्वयंक्रमेणप्रत्येकंप्रेतार्घपात्रेकृत्वाप्रत्येकंमंत्रद्व
यंपठित्वा प्रपितामहार्घपात्रस्थजलंवृद्धप्रपितामहार्घपात्रस्थजलेमेलयेत् ततःप्रेतार्घपात्रंब्राह्मण
वामपार्श्वे ॐपित्रेस्थानमसीतिन्युब्जंकृत्वास्थापयेत् वृद्धप्रपितामहार्घपात्रस्थजलादिकंप्रपि
तामहार्घपात्रेकृत्वा तत्सर्वं पितामहार्घपात्रेकृत्वा पितामहार्घपात्रमुत्तानं प्रपितामहार्घपात्रोपरि
धृत्वातद्वयमुत्तानंवृद्धप्रपितामहार्घपात्रो परिधृत्वापात्रत्रयमेकदैवपितामहासनवामपार्श्वे ॐपितृ
भ्यः स्थानमसीतिन्युब्जंकृत्वास्थापयेत् एवंस्थापितमर्घपात्रचतुष्टयं दक्षिणापर्यंतं नचालये
त् ततोमोटकादिकमादाय अद्यामुकगोत्रपितरमुकप्रेतसपिंडीकरणश्राद्धेएतानिगंधपुष्पधूपदीप
तांबूलयज्ञोपवीतवासांसितेमयादीयतेतवोपतिष्ठतामितिपित्रेगंधादीनिदद्यात् पुनर्मोटकादीन्या
दाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेअमुकगोत्रपितामहामुकशर्म

स० न्नेतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेस्वधेतिपितामहायगंधादीन्युत्सृजेत् एवंप्रपि श्रा०
तामहायचगंधादीन्युत्सृजेत् तथाक्रमेणततःपितृब्राह्मणहस्तेस्वहस्तेन ॐएषगंधइतिचंदनंनिवे
१२ दयेत् सुगंधिइतितेनोक्ते एतानिपुष्पाणीतिनिवेदयेत् सुपुष्पाणीतितेनोक्ते एषधूपइतिनिवेदये
त् सुधूपइतितेनोक्ते एषदीपइतिदीपंनिवेदयेत् सुदीपइतितेनोक्ते ॐ इमेयज्ञोपवीतेइतिनिदेवयेत्
ॐसुयज्ञोपवीतेइतिप्रत्युक्ते एतानिवासांसीनिवेदयेत् सुवासांसीतितेनोक्तेब्राह्मणायप्रतिपादयेत्
पुष्पाणिशिखातिरिक्तदेशेनधारयेत् ततःपात्रब्राह्मणचतुर्दिशंचतुष्कोणंमंडलंजलेनकुर्यात् अपरं
पितामहादित्रिकेचतुष्कोणंमंडलंकुर्यात् ततःसव्यंकृत्वाप्राङ्मुखउपविश्यपातितदक्षिणजानुस्ता
म्रपात्रादौव्यंजनक्षारवर्जितंसघृतमन्नंकृत्वापुटकादिस्थजलहस्तेन ॐअग्नयेकव्यवाहनायस्वाहा १२
ॐ सोमायपितृमतेस्वाहाइत्याहुतिद्वयंतदन्नंचजुहुयात् तत अपसव्यंकृत्वाऽवशिष्टमन्नंपितामहा
दिपात्रकिंचित्किंचिद्दद्यात् पिंडार्थंचावशेषयेत् ततोहस्ताभ्यांताम्रपात्रमादायतेनान्नंगृहीत्वाग्रे

तपात्रेध्यायन्परिविष्यात् पृथक्पुटकादिस्थितानिघृतजलव्यंजनानिचोपनयेत् ततस्तेनैवचक्र
मेणपितामाहादिपात्रत्रयेप्रत्येकमन्नादिपरिवेषणंकुर्यात् ततः प्रेतपात्रादिस्थितान्नेषुप्रत्येकंमधुदद्या
त् ततःप्रत्येकमभिमंत्रयेत् ॐमधुवाताऋतायतेमधुक्षरंतिसिन्धवः। माध्विर्न्नःसन्त्वोषधीः॥ ॐम
धुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः॥ मधुद्यौरस्तुनःपिता मधुमान्नोवनस्पतिर्म्मधुमाँअस्तुसूर्य्यः
माध्वीर्ग्गावोभवन्तुनः ॐमधुमधुमाध्वितिमन्त्रैः ततः प्रेतान्नपात्रंव्यस्ताभ्यांन्युब्जाभ्यांहस्ता
भ्यामालभ्य ॐपृथिवीतेपात्रंद्यौरापिधानंब्राह्मणस्यमुखेअमृतेऽअमृतंजुहोमिस्वाहा ॐइदम्वि
ष्णुर्विचक्रमेत्रेधानिदधेपदम्। समूढमस्यपाꣳसुरेइतिजपित्वा ॐकृष्णकव्यमिदंरक्षमदीयामि
त्युक्त्वापात्रेब्राह्मणस्यदक्षिणहस्तांगुष्ठंगृहीत्वा ॐइदमन्नं ॐइमाआपः ॐइदमाज्यम् ॐइदंहवि
रितिक्रमेणान्नजलघृतान्नेषुतन्निवेश्य ॐअपहताइत्यन्नोपरिप्रचुरतिलान्प्रक्षिप्य मोटकादीन्यादा
य अद्यामुकगोत्रपितरमुकप्रेतसपिण्डीकरणनिमित्तकश्राद्धेइदमन्नंसोपकरणंतेमयादीयतेतवोपात

 ष्ठतामितिपित्रेऽन्नमुत्सृजेत् अनेनैवक्रमेणपितामहान्नपात्रमालभ्य ॐपृथिवीतेपात्रमित्यादिपठि 
त्वा ॐइदमन्नमित्यादिनास्वदक्षिणहस्तांगुष्ठनिवेशनंकृत्वा ॐपहताइत्यादिनातिलानन्नेविकी
 र्य्य मोदकादीन्यादाय ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेऽमुक
गोत्रपितामहामुकशर्मन्नेतत्तेन्नंसोपकरणंस्वधेतिपितामहायान्नमुत्सृजेत् ततःप्रपितामहान्नपात्र
मालभ्यपूर्ववत् ॐपृथिवीतेपात्रमित्यादिकंसर्वंकृत्वामोदकादीन्यादाय अद्यामुकगोत्रस्यपितुर
मुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्रप्रपितामहाऽमुकशर्मन्नेतत्तेन्नंसोपकरणंस्वधेतिप्र
पितामहायान्नमुत्सृजेत् ततोवृद्धप्रपितामहान्नपात्रमालभ्यपूर्ववत् ॐपृथिवीतेपात्रमित्यादिकं
सर्वंकृत्वामोदकादीन्यादाय अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेऽमुक
गोत्रवृद्धप्रपितामहामुकशर्मन्नेतत्तेन्नंसोपकरणंस्वधेतिवृद्धप्रपितामहायान्नमुत्सृजेत् ततः ॐभ 
वानप्राशयन्त्वितिपात्रेब्राह्मणायजलचुलुकंदत्वासप्रणवव्याहृतिकांगायत्रीम् ॐमधुवाताइत्यादि

तृचं ॐमधुमधुमध्विति चजपित्वा ॐअन्नहीनमित्यादिचपठित्वा यथासुखंजुषस्वेतिपात्रब्रा
ह्मणंप्रतिब्रूयात्सच ॐ कारपूर्वंवामेनपाणिनापात्रमत्यजन् चुलुकंगृहीत्वाभुंजीतहासक्रोधत्वरादि
कंनकुर्यात् व्यंजनार्थंहस्तादिनापिसंज्ञांनकुर्यात् श्राद्धकर्तादर्भेष्वासीनःसप्रणवव्याहृतिकांगा
यत्रीं ॐमधुव्वाताइत्यादितृचं ॐमधुमधुमध्वितिचजपेत् गायत्रींब्राह्मणमनुश्रावयेत् ॐकृ
णुष्वपाजइत्यादीन्रक्षोघ्नान्मंत्रान्पठित्वाभूमिंतिलैरास्तीर्य श्राद्धीयब्राह्मणंपितृरूपतयाध्यात्वा
ॐउदीरतामवरइत्यादिपितृमंत्रान् ॐसहस्रशीर्षाइत्यादिपुरुषसूक्तम् ॐआशुःशिशानइत्या
दिकर्मप्रतिरथमन्यानिचाशिवसंकल्पप्रभृतीनिपवित्राणिऋग्यजुः सामानिरुचिस्तवप्रभृतीनिचय
थाशक्तिजपेत् ॐनमस्तुभ्यंविरूपाक्षइतिश्लोकमपिपठेत्वीणाध्वानिभिर्ब्राह्मणंहर्षयन्व्यंजनगुणा
न्इदमन्नमित्यादिक्रमेणकीर्तयन्यत्रयत्रेच्छोपलभ्यतेतस्यततदुपनयनम् मंदंमंदंभोजयेत् ततस्तृ
प्तंब्राह्मणंज्ञात्वापितामहपात्रसन्निधावास्तृतदक्षिणाग्रकुशत्रयांभूमिंप्रोक्ष्यसर्वप्रकारकमन्नमादायस

स०

तिलघृतंजलेनाप्लाव्य ॐअनग्निदग्धायेजीवाश्चयेप्रदग्धाःकुलेमम भूमौदत्तेनतृप्यंतुतृप्तायांतुपरां
गतिमित्यास्तृतकुशोपरितदन्नंविकिरेत्ततःसव्यंकृत्वाचामेत् हरिंस्मृत्वा अपसव्येनपात्रेब्राह्मणा
१४ य ॐइदंतेप्रत्यापोशनमितिजलगंडूषंदत्वा ॐस्वदितमितिपृष्टासुस्वदितितेनोक्ते ॐपि
ण्डमहंकरिष्येइतिपृच्छेत् कुरुष्वेत्यनुज्ञातः पात्रब्राह्मणायाचमनार्थंपात्रंदापयेत् ततःप्रेतपिंडदा
नार्थमेकामपरांपितामहादित्रिक पिंडदानार्थमेकहस्तामितांचतुरस्रांचतुरंगुलोच्छ्रितांसैकतांदक्षि
णप्लवांपिंडिकांनिर्माय तन्मध्येवामेनपाणिनादर्भपिंजुलींगृहीत्वा दक्षिनहस्तेनकृत्वातन्मूलेनस
व्योपगृहीतदक्षिणपाणिना ॐ अपहताइत्यादिपठित्वा दक्षिणाग्रां रेखांप्रादेशप्रमाणांसकृदुल्लिख्य
दर्भपिंजुलीमुत्तरस्यांदिशिक्षिपेत् एवमेवापरांपिंडिकायामप्येकांरेखांकुर्य्यात् ततःपूर्वपिंडिकारेखो १४
परि ॐयेरूपाणिप्रतिमुञ्चमानाऽअसुराःसन्तः स्वधयाचरन्ति परापुरोनिपुरोयेभरंत्यग्निष्टा
ल्लोकान्प्रणुदात्वस्मादितिमंत्रेणांगारंभ्रामयित्वा दक्षिणतः क्षिपेत् एवमेवापररेखायामंगारंभ्राम

श्रा०

येत् ततउभयत्ररेखायामुपमूलसकृल्लूनान्दक्षिणाग्रान्कुशानास्तृणुयात् ततः सव्यंकृत्वा ॐदेवता भ्यइतित्रिर्जपेत् ततोऽपसव्यंकृत्वा पुटकचतुष्टयेजलतिलगन्धपुष्पाणिकृत्वाएकंपुटकंवामहस्तेकृ त्वा मोटकादीन्यादाय ॐअद्यामुकगोत्रपितरमुकप्रेतसपिंडीकरणश्राद्धे पिंडस्थानेऽत्रावनेनि क्ष्वतेमयादीयते तवोपतिष्ठतामितिपूर्वपिंडिकायांछिन्नमूलोपरिअवनेजलंदद्यात् ततोऽपरंपु टकंवामहस्तेकृत्वा मोटकादीन्यादाया ॐअद्यामुकगोत्रस्यपितरमुकप्रेतस्यसपिंडीकरणनिमित्तक श्राद्धपिंडस्थानेऽमुकगोत्रापितामहाऽमुकशर्मन्नत्रावनेनिक्ष्वतेस्वधेति द्वितीयपिंडिकायामास्तृत कुशमूलसन्निधानेपितामहायावनेजनजलंदद्यात् ततोऽपरपुटकंवामहस्तेकृत्वा दक्षिणहस्तेनमोट कादीन्यादाय अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेपिंडस्थानेऽमुकगोत्रे प्रपितामहामुकशर्मन्नत्रावनेनिक्ष्वतेस्वधेत्यास्तृतकुशमध्येप्रपितामहायावनेजनजलंदद्यात् ततो ऽपरंपुटकंवामहस्तेकृत्वा मोटकादीन्यादाय अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसापिंडीकरणनिमि

स० त्तकश्राद्धेपिंडस्थानेऽमुकगोत्रवृद्धप्रपितामहामुकशर्मन्नत्रावने निक्ष्वतेस्वधेत्यास्तृतकुशाग्रेवृद्धप्र श्रा०
पितामहायावनेजनजलंदद्यात् ततःसर्वव्यञ्जनतिलजलमध्वाज्यसहितान्नेनप्रेतपिंडंसर्वव्यंजनति
१९ लजलजमध्वाज्यहुतशेषान्नेनपिण्डत्रयंचनिर्मायचतुरःपिण्डान्मधुघृताभ्यामभिघार्य प्रथमंप्रेत
पिंडंदक्षिणहस्तेनमोटकतिलजलानिचादाय ॐअद्यामुकगोत्रपितरमुकप्रेतसपिंडीकरणश्राद्धए
षपिंडस्तेमयादयितेतवोपतिष्ठतामितिपूर्वपिंडिकायांकुशोपारिपित्रेपिंडंदद्यात् ततोपरमोटका
दीनिचादाय ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेमुकगोत्रपिताम
हामुशकर्मन्नेषपिंडस्तेस्वधेतिद्वितीयपिंडिकायांप्रथमावनेजनस्थानेपितामहायपिंडंदद्यात् पुन
र्मोटकादीनिपिंडंचादाय अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेऽमुक १९
गोत्रप्रपितामहाऽमुकशर्मन्नेषतेपिंडःस्वधेतिप्रपितामहायापरावनेजनस्थानेपिण्डंदद्यात् पुन
र्मोटकादीनिपिंडंचादाय अद्यामुकगोस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेऽमुकगो

त्रवृद्धप्रपितामहामुकशर्मन्नेषतेपिंडःस्वधेतिवृद्धप्रपितामहायापरावनेजनस्थानेपिंडंदद्यात् ततः
पितामहादिपिण्डास्तरणकुशमूले ॐलेपभागभुजस्तृप्यंत्वितिकरंप्रोक्ष्यसव्यंकृत्वाचम्यहरिंस्मरे
त् ततोऽपसव्यंकृत्वादक्षिणाभिमुखःपितरमुद्दिश्य ॐअत्रपितर्मादयस्वयथाभागमावृषायस्वे
तिपठित्वोत्तराभिमुखोभूत्वाश्वासं नियम्यभास्करमूर्तिंपितरंध्यायन्मुखंदक्षिणांदिशंप्रत्यावर्तयन्
ॐअमीमदंतपितरोयथाभागमावृषायिषतेतिपठेत् पितामहादीनुद्दिश्यदक्षिणामुखः ॐअत्र
पितरोमादयध्वंयथाभागमावृषायध्वमितिपठेत् उत्तराभिमुखोभूत्वाश्वासंनियम्यतुष्टान्भास्करमू
र्तीन्पितामहादीन्ध्यायन्मुखंदक्षिणांदिशंप्रत्यावर्तयन् ॐअमीमदंतपितरोयथाभागमावृषायि
षतेतिपठेत् ततःप्रत्यवनेजलपात्रंवामहस्तेकृत्वामोटकादीन्यादाय ॐअद्यामुकगोत्रपितरमुक
प्रेतसपिंडीकरणश्राद्धेपिंडेऽत्रप्रत्यवने निक्ष्वतेभयादीयतेतवोपतिष्ठतामितिपित्रेप्रत्यवनेजनंदत्वा
पितामहावनेजनपात्रंवामहस्तेकृत्वामोटकादीन्यादाय अद्यामुकगोत्रपितुरमुकप्रेतस्यसपिंडीक

रणनिमित्तकश्राद्धेपिंडेऽमुकगोत्रपितामहामुकशर्मन्नत्रप्रत्यवनेनिक्ष्वतेस्वधेतिपितामहायप्रत्यवने
जनजलंदद्यात् प्रपितामहावनेजनपात्रंगृहीत्वामोटकादीन्यादाय ॐअद्यामुकगोत्रस्यपितुरमु
कप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेपिंडेऽमुकगोत्रप्रपितामहामुकशर्मन्नत्रप्रत्यवनेनिक्ष्वतेस्वधेति
प्रपितामहायप्रत्यवनेजनंदद्यात् ततोऽवशिष्टंपुटकमादाय मोटकादीनिचादाय ॐअद्यामुक
गोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेपिंडेमुकगोत्रवृद्धप्रपितामहाऽमुकशर्मन्नत्रप्रत्य
वनेनिक्ष्वतेस्वधेतिवृद्धप्रपितामहायप्रत्यवनेजनंदद्यात् ततोनीवींविस्रंस्यसव्यंकृत्वाचम्यहरिंस्मृ
त्वा अपसव्यंकृत्वावामेनपाणिनाधृतंसूत्रंदक्षिणेनादाय ॐएतत्तेपितुर्वासइत्युभाभ्यांहस्ताभ्यां
पितृपिंडोपरिसूत्रंधारयेत् पूर्ववत्पुनः सूत्रमादाय ॐनमोवः पितरोरसायनमोवः पितरः शोषा
यनमोवः पितरोजीवायनमोवः पितरः स्वधायै नमोवः पितरोघोरायनमोवः पितरोमन्यवेनमोवः
पितः पितरोनमोवोगृहान्नः पितरोदत्तसतोवः पितरोदेष्म्म ॐएतद्वः पितरोवासइतिमंत्रंपठित्वा

प्रत्येकंपिंडोपरिसूत्रंधारयेत् ततोमोटकादीन्यादाय अद्यामुकगोत्रपितुरमुकप्रेतसपिंडीकरण
निमित्तकश्राद्धेपिंडेऽमुकगोत्रपितामहामुकशर्म्मन्नेतत्तेवासः स्वधेतिसूत्रंपितामहायोत्सृजेत् मोट
कादीन्यादाय ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेपिण्डेऽमुकगोत्र
प्रपितामहामुकशर्मन्नेतत्तेवासः स्वधेतिप्रपितामहायोत्सृजेत् पुनर्मोटकादीन्यादाय अद्यामुकगोत्र
स्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेपिंडेऽमुकगोत्रवृद्धप्रपितामहामुकशर्मन्नेतत्तेवासः
स्वधेतिवृद्धप्रपितामहायसूत्रमुत्सृजेत् ततः प्रत्येकंपितृपिंडादिषुगंधपुष्पधूपदीपतांबूलानिदद्या
त् ततः पिंडसमीपेतत्तत्पिडशेषान्नंविकिरेत् ततः पिंडेषुसूत्रादिकमपनीयहस्तद्वयेनसुवर्णरजत
कुशानादाय ॐयेसमानाइत्यादिमंत्रद्वयंपठित्वा प्रेतपिंडंत्रिधाविभजेत् वारद्वयंमंत्रपाठः ततः
प्रथमपिंडभागमादाय ॐयेसमानाः सुमनसः पितरोयमराज्ये तेषांलोकः स्वधानमोयज्ञोदेवेषुक
ल्प्यताम् येसमानाःसुमनसोजीवाजीवेषुमामकाःतेषा२श्रीर्मीयकल्प्यतामस्मिंल्लोकेशतसमाः२

स० इति मंत्रद्वयेनपितामहपिण्डे नियोजयेत् एवं द्वितीयपिंडभागमादाय मंत्रद्वयेनप्रपिताम श्रा०
हपिंडेनियोजयेत् एवंतृतीयपिंडभागमादायमंत्रद्वयेनवृद्धप्रपितामहपिंडेनियोजयेत् ततः प्रेत
१७ भागेनसहपिंडत्रयेप्रत्येकमेकीकृत्यसमंवर्तुलंकुर्यात् ततःप्रेतपूर्वकंपितामहादीनुद्दिश्यपिंडत्रयेगंपु
ष्पधूपदीपनैवेद्यतांबूलानिदद्यात् ततःसव्येनदेवान्नपात्रे ॐशिवापःसंतुइतिजलंदत्वाअपसव्येन
पितृब्राह्मणहस्तेपूर्वमंत्रेणजलंदद्यात् ॐसंत्वितिप्रतिवचनम् ततःपितामहाद्यन्नपात्रेषुप्रत्येकंजलं
दद्यात् अनेनैवक्रमेण ॐसौमनस्यमस्त्वितिदेवान्नपात्रेपुष्पम् ततोऽपसव्येनपित्रब्राह्मणहस्ते
अनेनैवमंत्रेणपुष्पम् ततःपितामहाद्यन्नपात्रत्रिकेऽनेनैवमंत्रेणप्रत्येकंपुष्पदद्यात् ततःसव्येनाक्षतं
चारिष्टमस्त्वितिदेवान्नपात्रेतंडुलप्रक्षेपःततोपसव्येनप्रेतश्राद्धपात्रब्राह्मणहस्ते ॐअक्षतंचारिष्टम १७
स्त्वितितंडुलप्रक्षेपः ततःॐअस्त्वितिब्राह्मणप्रतिवचनम् पितामहाद्यन्नपात्रत्रिकेपिप्रत्येकं ॐअक्ष
तंचारिष्टमस्त्वितितंडुलप्रक्षेपः ततोमोटकादीन्यादाय ॐ अद्यामुकगोत्रस्यापितुरमुकप्रेतस्यस

पिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्रस्य पितामहस्यामुकशर्मणो दत्तैतदन्नपानादिकमक्षय्यम
स्त्वितिपितामहायाक्षय्योदकंदद्यात् पुनर्मोटकादीन्यादाय ॐअद्यामुकगोत्रस्यपितुरमुकप्रेत
स्यसपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्रस्यप्रपितामहस्यामुकशर्मणो दत्तैतदन्नपानादिकमक्षय्य
मस्त्वितिप्रपितामहायाक्षय्योदकंदद्यात् एवंवृद्धप्रपितामहायाक्षय्योदकंदद्यात् ततःसव्यंकृत्वा
कृतांजलिस्तन्मनाः सुमनादक्षिणांदिशंपश्यन् ॐअघोराःपितराःसंत्वितिपितामहादिपिंडत्र
योपरिपूर्वाग्रांजलधारांदद्यात् ॐसंत्वितिब्राह्मणप्रतिवचनम् अत्रवारिधारादानमाचारात् अन्य
थातुपाठपात्रम् ततःप्राङ्मुखोगोत्रंनोवर्द्धतामितिपठेत् ॐवर्द्धतामितिप्रतिवचनम् दातारोनोभि
वर्द्धन्तांवेदाःसंततिरेवच श्राद्धाचनोमाव्यगमद्बहुदेयंचनोस्तु अन्नंचनोबहुभवेदतिथींश्चलभेमहि
याचितारश्चनःसंतुमाचयाचिष्मकंचन एताः सत्याशिषः संत्वितियाचेत् ॐसंत्वितिप्रतिव
चनम् ततोऽपसव्यंकृत्वापिंडोपरिसपवित्रंकुशत्रयंदक्षिणाग्रमस्तीर्य ॐनमोवाचयिष्येइतिब्रा

ह्मणंब्रूयात् ॐवाच्यतामित्यनुज्ञातः ॐपित्रेनमः उच्यतामितिब्राह्मणंब्रूयात् अस्तुनमः इति
ब्राह्मणोवदेत् ततोवामहास्तोद्धृतंजलपात्रंदक्षिणेनादाय ॐऊर्ज्जंवहंतीरमृतंघृतंपयःकिलालंप
रिस्रुतम् स्वधास्थतर्प्पयतमेपितॄनितिपित्रादीनुद्दिश्यसपवित्रकुशोपरिदक्षिणाग्रांजलधारांदद्यात्
ततोनम्रीभूयपिंडानाधायोत्थापयेत् पिंडाधारकुशानुल्मुकंचवह्नौप्रक्षिपेत् सव्येनदेवार्घपात्रंसं
चाल्यापसव्येनपित्राद्यर्घपात्राण्युत्तानीकृत्यदक्षिणादद्यात् ततः सव्येनकुशत्रययवजलदक्षिणा
द्रव्याण्यादाय अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्रपितामह
प्रपितामहवृद्धप्रपितामहानाममुकामुकशर्मणांश्राद्धसंबंधिनां विश्वेषांदेवानांकृतैतच्छ्राद्धप्रतिष्ठार्थ
मिदंहिरण्यमग्निदैवतंयथानामगोत्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजेत्इतिप्राङ्मुखउत्सृजेत् ततो
पसव्यंकृत्वादक्षिणामुखोमोटकतिलजलान्यादायदक्षिणांचादाय अद्यामुकगोत्रस्यपितुरमुकप्रेत
स्यकृतैतत्सपिंडीकरणश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायतुभ्यमहं

संप्रददेइतिदक्षिणांपितृब्राह्मणकरेदद्यात् ॐस्वस्तीतिप्रतिवचनम् पुनस्तथैवदक्षिणाद्रव्यादिक
मादाय अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धेकृतैतदमुकगोत्रप्रपितामहा
मुकशर्मश्राद्धप्रतिष्ठार्थमिदंरजतंचद्रदैवतंयथानामगोत्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजेइतिप्रपि
तामहश्राद्धदक्षिणांदद्यात्पुनर्दक्षिणाद्रव्यादिकमादाय ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिं
डीकरणनिमित्तकश्राद्धेकृतैतदमुकगोत्रवृद्धप्रपितामहामुकशर्मश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतंय
थानामगोत्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजेइतिवृद्धप्रपितामहश्राद्धदक्षिणांदद्यात् ततःसव्यंकृ
त्वाॐविश्वेदेवाःप्रीयन्तामितिदेवविसर्जनंकृत्वा अपसव्यंकृत्वापितृश्राद्धब्राह्मणम् ॐनिरोंकारंस्व
स्तिब्रूहीतिवदेत् स्वस्तीतितेनोक्ते स्वस्त्यस्तुइतिपितृब्राह्मणंविसृज्यगृहीतापितृब्राह्मणांगुष्ठोपगृ
हीतोदकपात्रोबहिर्निमंत्रणस्थानमागत्यब्राह्मणंस्थापयित्वा ॐआमावाजस्यप्रसवोजगम्यादेमेद्या
वापृथिवीविश्वरूपे आमागन्तांपितरामातराचामासोमोऽमृतत्वेनगम्यादितिप्रदक्षिणंकुर्वन् पूर्वव

दुदकधारयात्रिर्वेष्टयेत् ततः प्रणम्याष्टौपादाननुव्रज्यप्रदक्षिणीकृत्याभिवादयेत् ततः सव्यंकृत्वा ॐ
देवताभ्यइतित्रिर्जपेत् ततोगृहंप्रविश्यसव्याऽपसव्याभ्यांदेवपितृश्राद्धदीपान्पाणिभ्यांनिर्वापयेत्
ततः सव्येनपाणिपादप्रक्षालनमाचमनंचकुर्यात् ततः ॐ प्रमादादित्यादिपठित्वा एतत्फलकामोवि
ष्णुंस्मरेत् अपरश्राद्धचतुष्टयद्रव्यप्रतिपत्तिब्राह्मणायकुर्यात् पिंडान्जलेप्रतिपादयेत् उच्छिष्टमा
र्जनंकुर्यात् वैश्वदेवबल्यनंतरंदशप्रभृतिश्रोत्रियान् यथाशक्तिभोजयेत् ॥ अमुकगोत्रस्यपितुः
सपिंडीकरणश्राद्धेएतांस्त्रयोदशकुंभान्सवस्त्रान्सोदकान् अमुकगोत्रेभ्योब्राह्मणेभ्यः दातुमहमुत्सृजे
अमु०गो० पितुरत्रदिनेसिद्धान्नपक्वान्नआमान्नपदवस्त्रहिरण्यादिकंअमुकगोत्रायब्राह्मणायतुभ्यमहं
संप्रददे पंचबलीन्दद्यात् ततोगणेशपूजनं अमुकगोत्रस्यपितुः शय्यादानार्थंपुष्पाक्षतफलद्रव्यवासो
भिः अमुकशर्मणेब्राह्मणायत्वामहंवृणेवृतोस्मि रक्षाबंधनंलक्ष्मीनारायणपूजनंपादप्रक्षालनंतिल
ककालज्ञानं अमुकगोत्रायब्राह्मणायइमांशय्यांफलवस्त्राभरणभूषितांतुभ्यमहंसंप्रददे प्रदक्षिणा

अमुकगोत्रस्यपितुः इमांगांसवत्सांवस्त्रालंकारसहितां अमुकगोत्रायब्राह्मणायतुभ्यमहंसंप्रददे इ
तिसपिण्डीश्राद्धप्रयोगः ॥ अथापात्रकैकोद्दिष्टश्राद्धप्रयोगः ॥ तत्रपूर्वदिनेकृतनियमः श्राद्धदिने
प्रातर्वस्त्रयुग्मेनकृतस्नानः पंचगव्योपलेपनज्वलदंगारभ्रामणगौरमृत्तिकाच्छादनैः श्राद्धभूमिसं
स्कारंकृत्वावस्त्रादिनावेष्टयित्वातिलगौरसर्षपैरवकीर्य्य पित्रासनस्थानाद्वामभागे श्राद्धदेयवस्तू
न्यासाद्यकृतस्नानादिर्मध्याह्नेशुचिः शुक्लद्विवासाः पादौप्रक्षाल्याचम्यश्राद्धदेशमागच्छेत् तत्र
स्वयंपाकंकुर्यात् सपिण्डस्त्रीद्वारावापाचयेत् ततःपाकेवृत्तेरक्षादीपंनिधायपुनराचम्यप्राङ्मुख
उपविशेत् अन्यकृतेपाकेसिद्धमितिपृष्ट्वा ॐअपवित्रःपवित्रोवेत्यादि ॐपुंडरीकाक्षः पुनात्वि
तिपठित्वाकुशत्रयजलैः श्राद्धवस्तून्यभिषिंचयेत् ततःकुशत्रयतिलजलान्यादाय ॐअद्यामुकमा
सीयामुकपक्षयामुकतिथौअमुकगोत्रस्यापितुरमुकशर्मणःसांवत्सरिकैकोद्दिष्टश्राद्धमहंकरिष्येइतिसं
कल्पंकुर्य्यात् ततोगायत्रींत्रिर्जपित्वा ॐदेवताभ्यइत्यादित्रिर्जपेत् ततोऽपसव्यंकृत्वाद्दक्षिणा

पि० मुखः पातितवामजानुः मोटकादीन्यादाय अद्यामुकगोत्रस्यपितुरमुकशर्मणः सांवत्सरिकैकोद्दि ए०
ष्टश्राद्धइदमासनंतेस्वधेति पूर्वोपकल्पितंमोटकरूपमासनंतिलजलप्रोक्षितंदक्षिणाग्रंपितृतीर्थेनो
२० त्सृजेत् ॐअपहतेत्यादिनाभोजनपात्रेतिलान्विकीर्य्य ॐआयंतुनइत्यादिपाठित्वाततोऽर्घंकर
णंपुटकादौदक्षिणाग्रंपवित्रंधृत्वा ॐशन्नोदेवीरितिमंत्रेणजलंप्रक्षिप्य ॐतिलोसीतितिलान् प्रक्षि
प्यगंधपुष्पेतूष्णींक्षिपेत् ततोर्घपात्रंवामहस्तेकृत्वाभोजनपात्रेपवित्रमुत्तराग्रंधृत्वातदुपरिउदका
न्तरंदत्वायादिव्याइतिपठित्वा अद्यामुकगोत्रपितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धएषहस्ता
र्घःस्वधेतिपवित्रोपरिजलंयथापातितमेवमुत्सृजेत् ततःपवित्रयुतंतदर्घपात्रमवशिष्टजलयुतमेवास
नवामभागे ॐपित्रेस्थानमसीतिन्युब्जीकुर्यात्दक्षिणादानपर्यन्तंनोद्धरेत्नचालयेत् ततोगंधा २०
दिदद्यात् ततोमोटकतिलजलान्यादायअद्यामुकगोत्रपितरमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्धेएता
निगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेस्वधेतिगन्धादीन्दद्यात् ततोजलेनभोजनपात्रासन

योश्वतुर्दिशंमंडलंकृत्वा सव्यंजनंसघृततिलजलमन्नंकिंचिदग्रभागमुद्धृत्यमोटकादिना ॐइ
दमन्नमेतद्भूस्वामिपितृभ्योनमःइतिभूस्वामिनेन्नंदद्यात् ततः सिद्धमुष्णमन्नंरजतादिपात्रस्थंकरा
भ्यामादायपितरंध्यायन् मंदंमंदंपरिवेषणंकुर्यात् ततः पुरुषाहारक्षममन्नंपरिविष्ययथासंभ
वंव्यंजनमन्नंजलंघृतंचपात्रांतरस्थंतत्रोपनीय अन्नंमधुनाभिधार्य ॐमधुवातेत्यादित्र्यृचंमधु
मधुमध्वितिचजपित्वापात्रमालभेत् ततः सव्येनहस्तेनपात्रंपश्चिमभागेस्पृशन् तदुपरिगतद
क्षिणहस्तेनाधोमुखेनपूर्वभागेपात्रंस्पृशन् ॐपृथिवीतेपात्रमित्यादि ॐइदंविष्णुरित्यादिः ॐकृ
ष्णकव्यमिदंरक्षमदीयामितिपठित्वा वामेनपाणिनापात्रं स्पृशन्नेवदक्षिणं पाणिमुद्धृत्य ॐइदम
न्नं ॐइदमाआपः ॐइदमाज्यं ॐइदंहविरित्यन्ने जलेघृते पुनरन्नेचांगुष्ठंनिक्षिप्य ॐअ
पहतेत्यादिनान्नोपरितिलान्विकीर्य मोटकतिलजलान्यादाय अद्यामुकगोत्राय पित्रेअमुकशर्म
णे सांवत्सरिकैकोद्दिष्टश्राद्धएतत्तेऽन्नं सोपस्करणं स्वधेत्युत्सृजेत् ततो वामहस्त

पि० मप्युद्धृत्य ॐ अन्नहीनमित्यादि पठित्वा ॐ गायत्रीं त्रिर्जपेत् कुशेषूपविश्य ॐ मधु ए०
वातेत्यादि जपेत् ततः कृणुष्वपाजइत्याद्यारक्षोघ्नीर्ऋचोजपित्वा भूमौ तिलान् विकीर्य पितरं ध्या
२१ त्वा ॐ उदीरतामवरइत्यादि पितृमंत्रान् सहस्रशीर्षाइत्यादि पुरुषसूक्तम् ॐ आशुःशिशानइत्या
दिकमप्रतिरथं च जपेत् यथाशक्त्यान्यान्यपि पवित्राणि जपेत् रुचिस्तवादीनि च जपेत् ॐ नमस्तु
भ्यं विरूपाक्षनमस्तेनेकचक्षुषे। नमः पिनाकहस्ताय वज्रहस्ताय वै नमः॥ इति पठित्वा उच्छिष्टसमी
पे दक्षिणाग्रं कुशत्रयमास्तीर्य जलेन सिक्त्वा किंचिदन्नं सघृततिलं जलसिक्तमादाय ॐ अनाग्निदग्धाइ
त्यादिमंत्रस्थफलमुद्दिश्य कुशोपरि अन्नं विकिरेत् ततः सव्यं कृत्वाऽचम्य हरिं स्मृत्वा गायत्रीं मधुवाता
इत्यादिकं मधुमधुमाध्विति च जपेत् ततोऽपसव्यं कृत्वा हस्तमात्रं चतुरंगुलोच्छ्रितदक्षिणप्लवपिंडिका २१
यां प्रादेशमात्रं परिमाय दर्भपिंजुल्या दक्षिणांगुष्ठतर्ज्जनीधृतमूलया वामहस्तांगुष्ठतर्जनीधृतोपरि
भागया ॐ अपहताअसुरारक्षांसि वेदिषदइति प्रादेशमात्रमुल्लिख्य दर्भपिंजुलीमुत्तरस्यां दिशि

त्यजेत् ॐ येरूपाणीत्यादिनांगारंभ्रामयित्वा अंगारंदक्षिणस्यांक्षिपेत् तत्रमंत्रछिन्नमूलकुश
त्रयमास्तीर्य्य सव्यंकृत्वादेवताभ्यइतित्रिर्जपेत् ततःअपसव्यंकृत्वातिलजलगंधपुष्पाणिपुटके
कृत्वापुटकंवामहस्तेधृत्वामोटकतिलजलान्यादाय ॐअद्यामुकगोत्रपितरमुकशर्म्मन्सांवत्सरिकै
कोद्दिष्टश्राद्धपिंडस्थानेऽत्रावनेनिक्ष्वतेस्वधेतिछिन्नमूलकुशोपरिअवनेजनंदद्यात् किंचिज्जलंपुट
केऽवशेषयेत् ततःतिलजलव्यंजनघृतमिश्रैरन्नैःपिण्डंबिल्वोपमंनिर्माय मधुघृताभ्यामभिघार्य्य
मोटकातिलजलसहितमादायसव्योपगृहीतदक्षिणहस्तेन ॐअद्यामुकगोत्रपितरमुकशर्मन्सांवत्स
रिकैकोद्दिष्टश्राद्धेएषतेपिण्डः स्वधेतिछिन्नमूलकुशोपरिपिण्डंदद्यात् ततःकुशमूलेतूष्णींकरंप्रो
क्ष्यसव्यंकृत्वाद्विराचामेत्हरिंस्मृत्वाअपसव्यंकृत्वादक्षिणामुखःॐअत्रपितरोमादयस्वयथाभागमा
वृषायस्वेतिपठित्वाउत्तराभिमुखीभूयश्वासंनियम्य पितरंध्यायन् पुनर्दक्षिणाभिमुखोभवन् ॐअ
मीमदंतपितर्यथाभागमावृषायिषेतिपठेत् ततःपूर्वदत्तावशिष्टजलयुतप्रत्यवनेजनजलपात्रमादा

य ॐ अद्यामुकगोत्रपितरमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्धे पिंडेऽत्रप्रत्यवने॑निक्ष्वतेस्वधेतिपिंडोप 
रिप्रत्यवनेजनंदद्यात् ततोनीवींविस्त्रंस्यसव्येनाचम्यापसव्यंकृत्वावामेनपाणिनासूत्रमादाय द
२२ क्षिणकरेणधृत्वा ॐनमस्तेपितारसाय नमस्तेपितुःशोषायनमस्तेपितर्जीवायनमस्तेपितः स्व
धायैनमस्तेपितरघोरायनमस्तेपितरमन्यवेनमस्तेपितः पितर्नमस्ते गृहान्नः पितर्देहिसतस्ते
पितर्देष्मइतिपठित्वा ॐएतत्तेपितर्वासइतिपिंडोपरिसूत्रंदद्यात् ततोमोटकतिलजलान्यादाय
ॐअद्यामुकगोत्रपितरमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्धे पिंडेएतत्तेवासःस्वधेतिसूत्रमुत्सृजेत् ततः
पितरमुद्दिश्यपिंडेतूष्णींगंधपुष्पधूपदीपतांबूलानिदद्यात् ततःशिवाआपःसंत्विति जलं ॐसौम
नस्यमस्त्वितिपुष्पम् ॐअक्षतंचारिष्टमस्त्वितितंडुलान्भोजनपात्रेक्षिपेत् ततश्चमोटकतिलज २२
लान्यादाय ॐअद्यामुकगोत्रस्यपितुरकशर्मणःसांवत्सरिकैकोद्दिष्टश्राद्धेदत्तैतत्तदन्नपानादिकमक्षय्य
मुपतिष्ठतामित्यक्षय्योदकंदद्यात् ततःसव्यंकृत्वादक्षिणामुखः ॐअघोरःपितास्त्वितिपिण्डोप

रिपूर्वाग्रांजलधारांदद्यात् ततःपूर्वाभिमुखःकृतांजलिःसुमनाः ॐगोत्रंनोवर्द्धंतांदातारोनोभिव
र्द्धन्तांवेदाःसंततिरेवचश्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्तु अन्नंचनोबहुभवेदतिथींश्चलभेमहि या
चितारश्चनःसंतुमाचयाचिष्मकंचनएताः सत्याः आशिषःसन्तुइत्याशीःप्रार्थनंकृत्वा अपसव्यंकृ
त्वासपवित्रकुशत्रयंदक्षिणाग्रंपिंडोपरिधृत्वा ॐउर्ज्जंव्वहन्तिरमृतमितिमंत्रेणकुशोपरिदक्षिणाग्रां
जलधारांदद्यात् ततोनम्रीभूयपिंडमाघ्रायोत्थापयेत् पिण्डाधारकुशानुल्मुकंचवन्हौक्षिपेत् अर्घपा
त्रमुत्तानीकृत्यदक्षिणांदद्यात् तथामोठकादीन्यादायरजतंच ॐअद्यामुकगोत्रस्यपितुरमुकशर्मणः
कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतंयथानामगोत्रायब्राह्मणायदक्षिणांदातु-
महमुत्सृजे यद्युपस्थितंरजतंनभवातितदारक्तिकामितंरजतंचंद्रदैवतामित्येवमादिवाक्यंकर्तव्यंइदंप
दंनदातव्यमितिशेषः ततः ॐअभिरम्यतामितिविसर्जनम् ततःसव्यंकृत्वा देवताभ्यःपितृभ्यश्चम
हायोगिभ्यएवच। नमःस्वाहायैस्वधायैनित्यमेवनमोनमइतित्रिःपठेत् ततोपसव्यंकृत्वापाणिभ्यांदी

पंनिर्वापयेत् ततोहस्तौपादौप्रक्षाल्यसव्यंकृत्वाचम्यॐब्रह्मणेस्वाहा ० ॐप्रजाप ० ॐगृह्येभ्यस्वाहा
ॐकश्यपायस्वाहा ॐअनुमतयेस्वाहा ततोहुतशेषान्नेनबलिदानं ॐपर्ज्जन्यायनमः अद्भ्यो
नमः पृथिव्यैनमः उदकसंस्थंधात्रेनमः विधात्रेनमः द्वारशाखयोः वायवेनमः इतिप्रतिदिशं ॐ
प्राच्यैनमः ॐअवाच्यैनमः ॐप्रतीच्यैनमः ॐउदीच्यैनमः ॐप्रती० ॐब्रह्मणेनमः ॐअंतरि
क्षाय० ॐसूर्य्याय० इतिमध्ये० ॐविश्वेभ्योदेवेभ्योनमः ॐविश्वेभ्योभूतेभ्योनमः ॐउषसेनमः
ॐभूतानांपतयेनमः इत्युत्तरोत्तरं ततःप्राचीनावीतीदक्षिणाभिमुखः पातितवामजानुःपितृतीर्थे
नदक्षिणस्यांदिशि ॐपितृभ्यः स्वधानमः इतिदद्यात् ततोबलिशेषान्नलिप्तपात्रंप्रक्षाल्ययक्ष्मै
तत्तेनिर्णेजनंनमः इतिवायव्यांदिशिदद्यात् देवामनुष्याः पशवोवयांसिसिद्धाः सयक्षोरगदैत्यसं
घाः। प्रेताः पिशाचास्तरवः समस्तायेचान्नमिच्छंतिमयाप्रदत्तम्। १। पिपीलिकाःकीटपतंगकाद्याः
बुभुक्षिताः कर्मनिबंधबद्धाः प्रयांतुतेतृप्तिमिदंमयान्नंतेभ्योविसृष्टंसुखिनोभवंतु येषांनमातानपि

तानबंधुर्नचान्नसिद्धिर्नतथान्नमस्ति तत्तृप्तयेन्नंभुविदत्तमेतत्तेषांतुष्ट्यास्तिरुदिताभवंतु शंखः सौरभे
य्यइतिगोभ्यस्ततः द्वौश्वानावितिशुनांऐंद्रेतिवायसानांचशनैर्निवर्तयेद्भूवि ततोब्राह्मणान्भोज
येत्इतिनैमित्तिकश्राद्धबलिदानम् ॐप्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् स्मरणादेवतद्वि
ष्णोः संपूर्णंस्यादितिश्रुतिरितिपठित्वा श्राद्धसंपूर्णकामोविष्णुंस्मरेत् श्राद्धीयवस्तूनिब्राह्मणाय
प्रतिपादयेत् अंभसिवाक्षिपेत् ततःशेषंज्ञातिभिः सहभुंजीतएवमेवापितृव्यभ्रात्रादिश्राद्धप्रयोगः
शस्त्रादिहतनिमित्तकमाश्विनकृष्णचतुर्दश्यामप्येकोद्दिष्टमेवकर्तव्यं तत्रसांवत्सरिकपदंपरंनदातव्य
मिति ॥ अथमातृश्राद्धप्रयोगः अथशुक्लांबरःस्नातोमध्याह्नेसुसमावृतंपंचगव्योपलेपितंज्वलदंगारशो
धितंगौरमृत्तिकाच्छादितंयथाप्रदेशासादितश्राद्धीयद्रव्यंतंदेशमागत्यपादौप्रक्षाल्याचम्यसपिंडसपिं
डस्त्रीद्वारापाचयेत् स्वयंवापचेत् ततःपादौप्रक्षाल्याचम्यशुद्धासनेउपविश्यदीपंप्रज्वालयित्वाचम्य
प्राङ्मुखःपरकर्तृकेपाकेसिद्धमितिपाचिकांपृष्ट्वा ॐअपवित्रःपवित्रोवासर्वावस्थांगतोपिवायःस्मरे

मा० त्पुडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॐपुंडरीकाक्षःपुनात्वितिकुशत्रयजलैःश्राद्धीयद्रव्याणिसिंचयेत्तत ए०
तःकुशत्रयतिलजलान्यादाय ॐअद्यामुकमासीयामुकपक्षीयामुकतिथावमुकगोत्रायामातुरमुकदे
२४ व्याःसांवत्सरिकैकोद्दिष्टश्राद्धमहंकरिष्येइतिसंकल्पंकुर्य्यात् ततोगायत्रींत्रिर्जपित्वादेवताभ्यस्त्रिर्जपे
ततोऽपसव्यंकृत्वापातितवामजानुर्दक्षिणामुखोमोटकातिलजलान्यादाय अद्यामुकगोत्रायामातुरमु
कदेव्याःसांवत्सरिकैकोद्दिष्टश्राद्धइदमासनंतेस्वधेतिमोटकरूपमासनंदक्षिणाग्रंसतिलमुत्सृजेत् त
तः ॐअपहताऽअसुरारक्षा ठं० सिवेदिषदइत्यन्नपात्रेवामावर्तेनातिलान्विकीर्य्य ॐआयन्तुनः
पितराःसोम्यासोग्निष्वाताःपतिभिर्देवयानैः अस्मिन्यज्ञेस्वधयामदंतोधिब्रुवन्तुतेवन्त्वस्मानितिप
ठित्वा अर्घपात्रेदक्षिणाग्रंपवित्रंधृत्वा ॐशन्नोदेवीरभिष्टयेआपोभवंतुपीतये शंय्योरभिस्रवंतुनइति २४
अर्घपात्रेजलंक्षिपेत् ॐतिलोसिसोमदैवत्योगोसवोदेवनिर्मितः प्रत्नवद्भिःपृक्तःस्वधयापितॄँल्लोकान्
प्रीणयाहिनःस्वाहेतितिलान्क्षिप्त्वागंधपुष्पेतूष्णींक्षिपेत् ततोऽर्घपात्रंवामहस्तेकृत्वापवित्रंभोजन

पात्रोपरिउत्तराग्रंधृत्वातदुपरिकिंचिदुदकांतरंदत्वा ॐयादिव्याऽआपःपयसासंबभूवुर्य्याऽआन्त
रिक्षाऽउतपार्थिवीर्याः हिरण्यवर्णायज्ञियास्तानऽआपःशिवाःसꣳ० स्योनासुहवाभवंतुइतिपठित्वा
मोटकतिलजलान्यादाय अद्यामुकगोत्रेमातरमुकदेविसांवत्सरिकैकोद्दिष्टश्राद्धएषतेहस्तार्घःस्वधे
तिअर्घंददद्युत्सृजेत् ततोऽवशिष्टजलसहितंपवित्रसहितंचार्घपात्रमासनवामभागे ॐमात्रेस्थानम
सीतिन्युब्जीकुर्यात् तच्चदक्षिणादानपर्यंतंनोद्धरेत्ततोगंधादिदानम् ॐअद्यामुकगोत्रेमातरमुक
देविसांवत्सरिकैकोद्दिष्टश्राद्धएतानिगंधपुष्पधूपदीपतांबूलसिंदूरवासांसितेस्वधेतिदद्यात् ततोजले
नासनसहितभोजनपात्रस्यचतुर्दिक्षुचतुष्कोणंमंडलंकृत्वासव्यंजनंश्राद्धदेयान्नाग्रभागंतिलजलसहि
तंकुत्रचित्पुटकादौकृत्वा ॐइदमन्नमेतद्भूस्वामिपितृभ्योनमइतिमोटकादिनाभूस्वामिने न्नमुत्सृ
जेत् ततःकराभ्यांताम्रपात्रस्थमन्नंमातरंध्यायन्भोजनपात्रेपुरुषाहारक्षमंपरिविष्ययथासंभवंसव्यं
जनंघृतंपानीयंचपात्रांतरेषूपनीयमधुनान्नमभिघारयेत् ततः ॐमधुव्वाताऽऋतायतेइतिपठित्वा
ॐमधुमधुमध्वितिचजपेत् ततःपाणिभ्यांन्युब्जाभ्यांव्यस्ताभ्यांपात्रंस्पृशन् ॐपृथिवीतिपात्रंद्यौ

रपिधानंब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वाहा ॐइदंविष्णुर्व्विचक्रमेत्रेधानिदधेपदं समूढम
स्यपार्ठ० सुरे ॐकृष्णकव्यमिदंरक्षमदीयमितिपठेत् ततोदक्षिणहस्तमुत्तान्यतदंगुष्ठं ॐइदमन्ने
मित्यन्ने ॐइमाआपइतिजले ॐइदमाज्यमितिघृते ॐइदंहाविरितिपुनरन्नेनिवेशयेत् ॐअपह
ताऽअसुरारक्षार्ठ० सिवेदिषदइतिअन्नेतिलान्क्षिपेत् ततोमोटकादीन्यादाय ॐअद्यामुकगोत्रायै
मात्रेऽमुकदेव्यैसांवत्सरिकैकोद्दिष्टश्राद्धइदमन्नंसोपकरणंतेस्वधाइत्यन्नमुत्सृजेत् ततःपात्रंत्यजेत्
ॐअन्नहीनंक्रियाहीनंविधिहीनंचयद्भवेत् तत्सर्वमच्छिद्रमास्त्वितिपठित्वा गायत्रींत्रिर्जपित्वा
कुशेषूपविश्य ॐमधुवातेतिजपेत् ततःकृणुष्वपाजइत्याद्यारक्षोघ्नीर्ऋचोजपेत् तिलान्भूमौवि
कीर्य्यमातरंध्यात्वा ॐउदीरतामवरइत्यादिपित्र्यमंत्रान्सहस्रशीर्षेत्यादिपुरुषसूक्तम् ॐआशुः
शिशानइत्यादिकमप्रतिरथंअन्यानचमंत्रान्जपेत् ततउच्छिष्टसमीपेकुशत्रयमास्तीर्यजलेनप्रो
क्ष्यसव्यंजनमन्नंसघृतंसातिलंजलप्रोक्षितमादाय ॐअनाग्निदग्धायेजीवायेप्रदग्धाःकुलेमम भूमौ

दत्तेनतृप्यंतुतृप्तायांतुपरांगतिमितिकुशोपरिअन्नमुत्सृजेत् ततःसव्यंकृत्वाचम्यहरिंस्मृत्वागायत्रीं मधुवातेतिचजपेत् अपसव्यंकृत्वावेदिकांकृत्वापिंडस्थानेप्रादेशमात्रं ॐअपहताऽअसुरारक्षांसि वेदिषदइतिमंत्रेणदर्भपिंजुल्याउल्लिखेत् दर्भपिंजुलीमैशान्यांक्षिपेत् ततः ॐयेरूपाणिप्रति मुञ्चमानाऽअसुराःसंतःस्वधयाचरंति परापुरोनिपुरोयेभरन्त्यग्निष्टाल्लोकान्प्रणुदात्यस्मादितिमंत्रे णरेखायामंगारंभ्रामयित्वादक्षिणास्यांदिशित्यजेत् ततस्तत्रछिन्नमूलकुशानास्तीर्य्यसव्यंकृत्वा देवताभ्यइतित्रिर्जपेत् ततोऽपसव्यंकृत्वापुटकेजलतिलपुष्पगंधान्कृत्वामोटकतिलजलान्यादाय ॐअद्यामुकगोत्रेमातरमुकदेविसांवत्सरिकैकोद्दिष्टश्राद्धे पिंडस्थानेऽत्रावने निक्ष्वते स्वधेतिछि न्नमूलकुशोपरि अवनेजनंदद्यात् ततस्तिलघृतसहितान्नेनपिंडंकृत्वा मधुघृताभ्यामभिघार्य्य मोटकतिलजलपिण्डानादाय अद्यामुकगोत्रे मातरमुकदेविसांवत्सरिकैकोद्दिष्टश्राद्धएषतेपिंडं स्वधेतिपिण्डंसव्योपगृहीतेदक्षिणहस्तेनकुशोपरिदद्यात् ततःकुशमूलेकरंप्रोक्ष्यसव्यंकृत्वा द्वि

राच्यम्यहरिंस्मृत्वाअपसव्यंकृत्वादक्षिणामुखः ॐअत्रमातर्मादयस्वयथाभागमावृषायस्वेतिपठेत्
उदङ्मुखीभूयश्वासंनियम्यमातरंध्यायन्परावर्तमानः ॐअमीमदंतमातायथाभागमावृषायिष्टेति
पठेत् ततोऽवनेजनावशिष्टंजलसहितंपुटकमादायमोटकातिलजलान्यादाय ॐअद्यामुकगोत्रेमा
तरमुकदेविसांवत्सरिकैकोद्दिष्टश्राद्धपिंडेप्रत्यवनेनिक्ष्वतेस्वधाइतिप्रत्यवनेजनंदद्यात् ततोनीवीं
विस्रंस्यसव्यंकृत्वाचम्यअपसव्यंकृत्वावामेनपाणिनाधृतंसूत्रंदक्षिणेनचादाय ॐनमस्तेमातार
सायनमस्तेमातः शोषायनमस्तेमातर्जीवायनमस्तेमातः स्वधायैनमस्तेमातर्घोरायनमस्तेमातर्म
न्यवेनमस्तेमातर्मातर्नमस्तेगृहान्नोमातर्देहिसतस्तेमातर्देष्मइतिपठित्वा एतत्तेमातर्वासइतिमंत्रे
णपिंडोपरिसूत्रंधृत्वामोटकातिलजलान्यादायअद्यामुकगोत्रेमातरमुकदेविसांवत्सरिकैकोद्दिष्टश्राद्ध
पिंडेएतत्तेवासःस्वधेतिसूत्रमुत्सृजेत् ततःपिंडेगंधपुष्पधूपादिपतांबूलानितूष्णींदत्त्वा ॐशिवा
आपःसंत्वितिजलं ॐसौमनस्यमस्त्वितिपुष्पम् ॐअक्षतंचारिष्टमास्त्वितितंडुलान्भोजनपात्रेनि

क्षिपेत् ततोमोटकतिलजलान्यादाय अद्यामुकगोत्रायामातुरमुकदेव्याःसांवत्सरिकैकोद्दिष्टश्रा
द्धेदत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकमुत्सृजेत् ततःसव्यंकृत्वादक्षिणामुखः ॐ
अघोरामातास्त्वितिपिंडोपरिपूर्वाग्रांजलधारांदद्यात् ततःपूर्वाभिमुखः कृतांजलिः ॐगोत्रंनोव
र्द्धन्तांदातारोनोभिवर्द्धन्तांवेदाःसंततिरेवच श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्त्विति अन्नंचनो
बहुभवेदतिथींश्चलभेमहि याचितारश्चनःसंतुमाचयाचिष्मकंचन एताःसत्याआशिषःसंत्वित्याशीः
प्रार्थनंकुर्यात् ततोऽपसव्यंकृत्वासपवित्रकुशत्रयंपिंडोपरिआस्तीर्य ॐऊर्ज्जंवहंतीरमृतंघृतंपयः
कीलालंपरिस्रुतम् स्वधास्थतर्पयतमेमातरमितिकुशोपरिदक्षिणाग्रांजलधारांदद्यात् ततोनम्रीभू
यपिंडमाघ्रायोत्थापयेत् पिंडाधारकुशानुल्मुकंवन्हौनिक्षिप्यार्घपात्रमुत्तानीकृत्यदक्षिणांदद्यात् त
तोमोटकतिलजलान्यादाय अद्यामुकगोत्रायामातुरमुकदेव्याःसांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थं
रत्तिकापरिमितंरजतंचंद्रदैवतंयथानामगोत्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजेइतियथाविभवंदद्या

त् ॐअभिरम्यतामितिविसर्जनंततः सव्यंकृ० देवताभ्यइतित्रिर्ज० ततोऽपसव्यंकृत्वाहस्ताभ्यां
दीपंनिर्वाप्यहस्तौपादौप्रक्षाल्यसव्येनाचम्य ॐप्रमादात्इतिउ० विष्णुंस्मृ०श्राद्धीयवस्तूनिब्रा
ह्मणायप्रतिपादयेत् जलेवाक्षिपेदितिमात्रैकोद्दिष्टम् ॥ अथपंचकशांतिःब्रह्मोवाच कुंभेमीनेगतेचं
द्रेमरणंयस्यजायते तस्यचाधोगतिंप्रोचुःसततंचाशुभंभवेत् नतस्यदाहःकर्तव्योविनाशःसर्वजा
तिषु अद्येत्यादिपठित्वा अमुकगोत्रस्याऽमुकप्रेतस्यधनिष्ठादिपंचकमरणोत्पन्नदुर्गतिनिवारणा
र्थंपुत्रादिसकलकुटुंबरक्षणार्थंपुत्तलकैःसहशवदाहेयथास्थानपुत्तलस्थापनपूजनमहंकरिष्ये पाद्यार्घ
मृन्मयदंतधावनंस्नानगंधाक्षतापुष्पाधूपदीपपूगीफलऊर्णासूत्रउशीरचंदनंभृंगराजएलालवंगयज्ञो-
पवीतवासांसिदक्षिणामदत्तंतवोपतिष्ठतांपंचपुत्तलान्पृथक्पृथक्पूजयेत् अमुकगोत्रस्याऽमुकप्रेत
स्यपंचकमरणदुर्गतिनिवारणार्थंपुत्रादिसकलकुटुंबरक्षणार्थंप्रेतवहाशिरासिअहंस्थापयामि १ अमु०
गो० अ० प्रेतस्यपञ्चकमरणदुर्गतिनिवारणार्थंपुत्रादिरक्षणार्थंप्रेतसखंदक्षिणकुक्षावहंस्थापयामि २

अमु० गो० अ० प्रे० पंचकमरणदुर्गतिनिवारणार्थंप्रेताधिपंवामकुक्षावहंस्थापयामि ३ अमु०गो० अ०प्रे० पंचकमरणदुर्गतिनिवारणार्थंप्रेतभूमिपंनाभौ अहंस्थापयामि ४ अमु०गो०अ०प्रे०दुर्गति निवारणार्थंप्रेतहर्तारंपादयोर्मध्येस्थापयामि ५ आज्यदग्धंकुर्य्यात्सूतकांतेयथाविप्रशांतिंकुर्यात्त थाशृणु मुर्तिंस्वर्णमयींकृत्वामाषकेनपृथक्पृथक् १ कलशान्पंचवैकुर्यात्मूलछिद्रविवर्जितान् पञ्चरत्न समोपेतांवस्त्रयुग्मेनवेष्टितान् २ तत्रशांतिःप्रकर्तव्यासर्वव्याहृतिपूर्वकं स्थंडिलंहस्तमात्रंचरक्तवस्त्रा वृतंतथा ३ अद्येत्यादिअमु० गो० प्रे० पंचकमरणोत्पन्नदुर्गतिनिवारणार्थंपुत्रादिसकलकुटुंबरक्ष णार्थमेभिर्गन्धाक्षतपूगीफलदक्षिणादिभिः अमुकगोत्रोऽहममुकशर्माऽहंपंकशांतिनिमित्तकधनिष्ठा नक्षत्रजपकरणार्थंशुनःशेपऋषिस्त्रिष्टुप्छंदः वसुदेवताप्रीतयेत्वामहंवृणेव्रतोऽस्मि अमु०गो०पि० अ मु०प्रे०पंचकमृत्युदोषनिवारणार्थंचंदनपुष्पाक्षततांबूलादिभिःशतभिषानक्षत्रजपकरणार्थंवसुकर्ण ऋषिर्गायत्रीच्छंदःवरुणदेवताप्रीतयेत्वामहंवृणे २ अमु०गो०पि०अमु०प्रे० पंचकदोषनिवारणार्थमे

भिश्चंदनपुष्पाक्षतपूगीफलदक्षिणाभिः पूर्वाभाद्रपदनक्षत्रजपकरणार्थंवरुणऋषिर्गायत्रीछंदः अजैक
पाददेवताप्रीतयेत्वामहंवृणे ३ अमु० गो० पितुः अमु० प्रे० पंचकमृत्युदोषनिवारणार्थमेभिश्चंदनपुष्पा
क्षतदक्षणाभिः पंचकशांतिनिमित्तकवासिष्ठऋषिस्त्रिष्टुपूछंदः अहिर्बुध्न्यदेवताप्रीतयेत्वामहंवृणे ४
अमु० गो० पितुअ० प्रे० पंचकशांतिनिमित्तकरेवतीनक्षत्रकण्वऋषिर्गायत्रीछंदः पूषादेवताप्रीतये
त्वामहंवृणे ८ धनिष्ठामंत्रः ॐवसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारंदेवत्वासवितापुना
तुवसोःपवित्रेणशतधारेणसुश्वाकामधुक्ष १ शतभिषामं० वरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्जनी
स्थोव २ पूर्वाभाद्र० ॐतन्नोऽहिर्बुध्न्यशृणोत्त्वजैकपादपृथिवीसमुद्रः विश्वेदेवोऋतावृधोहुवानास्तु
मंत्राःकविशस्ताश्रवंतु ३ उत्तराभाद्र० ॐशिवोनामासिस्वधितिस्तेपितानमस्तेऽस्तुमामाहिंसी०
सीःनिवर्तयाम्यायुषेन्नाद्यायप्रजननायरायस्पोषायसुप्रजस्त्वायसुवीर्याय ४ रेवतीमंत्रः ॐपूषंतव
व्रतेवयंनरिष्येमकदाचनस्तोतारस्तइहस्मसि ८ जपानंतरंनदीतीरेगत्वातद्देशेमंडलंकृत्वापंचसौव

र्णमूर्त्तीः कुर्य्यात घटस्थापनपूर्वेदक्षिणेपश्चमेउत्तरेमध्ये ॥ मृन्मयानिपंचकुंभानिवस्त्रतांबूलपूगीफल
तंडुलाक्षतेनमंडलोपरिवर्तनम् गणेशकलशनवग्रहषोडशमातृकासप्तर्षीणांचतुर्दशयमानांस्थापनं
कालज्ञानंअमु० गो० पितुः अ० प्रे० पंचकदोषनिवृत्यर्थंपरमगतिप्राप्तिकामनयापंचकशांतिमहंकरि
ष्येप्रथमंस्वस्तिवाचनंगणेशादिनवग्रहाषोडशमातृकासप्तर्षीन्चतुर्दशयमानांस्वस्वमंत्रैः पूजनमहंक
रिष्येगंधादिभिःप्रथमंस्वर्णमूर्तिंवसुदेवतापूर्वेकुंभेततःसाग्रंरुद्राध्यायंजपन्स्नापयेत्पूर्वेदिशिदुग्धज
लेनपूरितंपंचरत्नंप्रक्षिप्यवस्त्रेणवेष्टयकलशोपरिस्थाप्यवसोःपवित्रमसिशतधारंवसोः पवित्रमसिसह
स्रधारं० गंधाक्षतपुष्पधूपदीपतांबूलपुगीफलदक्षिणांसमर्प० धनिष्ठानक्षत्रवसुदेवतात्वंप्रसन्नोवरदो
भवनमस्कारंकु० १ स्वर्णमयींशताभिषावरुणप्रतिमांस्थापयेत् ॐइमंमेवरुणश्रुधीहवमध्याचमृडय
त्वामवस्युराचके० स्नानंकारयित्वादक्षिणकलशदधिउदकेनपूरितंवस्त्रेणावेष्टयस्थाप्य ॐवरुणस्यो
त्तंभनमसिवरुणस्य० गंधादिनाभ्यर्चयेत् २ स्वर्णमयींपूर्वाभाद्रपदनक्षत्रेअजपाददेवतारक्षोघ्नमिति

मंत्रेणस्नानंकारयित्वापश्चिमकलशेधृतोदकेनपूरितेतस्योपरिवस्त्रेणवेष्टयस्थाप्य ॐतन्नोऽहिर्बुध्न्यः
शृणोत्वजैकपादपृथिवींसमुद्रः०त्वंप्रसन्नोभव० ३ स्वर्णमयींउत्तराभाद्रपदनक्षत्रेऽहिर्बुध्न्यदेवतामान
स्तोकेतिमंत्रेणस्नानंकारयित्वाउत्तरेकलशेगोमयोदकेनपूरितेवस्त्रेणावेष्टचकलशोपरिस्थाप्यॐशि
वोनामासिस्वधितिस्तेपितानमस्ते० गंधादिनाभ्यर्चयेत्४प्रसन्नो०स्वर्णमयींरेवतीनक्षत्रेस्नानंम
ध्यकलशेदधिदुग्धेनपूरितंवस्त्रेणवेष्टचकलशोपरिस्थाप्य ॐपूषंत्वव्रतेवयंनकरिष्येमकदाचन०गं
धादिनाभ्यर्चयेत्५ चतुर्दशयमेभ्योनमःगंधादिभिःपू० सर्पेभ्योनमःगंधादिभिःसंपूज्यदशदिक्पाले
भ्योनमःगंधाक्षतैःसंपूज्यनमस्कारंसप्तविंशतिनक्षत्रेभ्योन० गंधा०ततःवेदिकायांतुषकेशशर्करार
हितायांहस्तमात्रपरिमितांचतुस्रांचतुरंगलोच्छ्रितांभूमिंकुशैः परिसमुह्यतान्कुशानऐशान्यांपरित्य
ज्यगोमयोदकेनोपलिप्यस्रुवमूलेनप्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेणोल्लिख्यउल्लेखनक्रमेणानामिकां
गुष्ठाभ्यांमृदमुद्धृत्यजलेनाभ्युक्ष्यतत्रतूष्णीं कांस्यपात्रस्थंवह्निंप्रत्यङ्मुखंसमाधायाग्निंस्थापयेत्

ततःब्रह्मवर्णंकुशकांडीकाकरणंआज्याहुतिर्जुहोति ॐप्रजापतयेस्वाहाइदं॰ इंद्रायस्वा॰इदं॰अग्न
ये॰इदं॰सोमाय॰इदं॰भूःस्वा॰इ॰भूवःस्वा॰इ॰स्वःस्वा॰इ॰सूर्यायस्वाहाइदं चंद्रायस्वाहाइ॰
भौमायस्वा॰इ॰बुधायस्वा॰इ॰गुरवेस्वा॰इ॰शुक्रायस्वा॰इ॰शनैश्चरायस्वा॰इ॰ राहवेस्वा॰इ
केतवेस्वा॰इ॰चरुहोमः ॐयमायस्वा॰इदंयमाय॰धर्मराजायस्वा॰इदं॰ इतिक्रमेणचतुर्दशयमा
न्नाहुतीर्दद्यात् अद्येत्यादिपंचकमरणोत्पन्नदुर्गतिनिवारणार्थंपुत्रादीनांसर्वारिष्टनिवारणार्थंअनेनच
रुणाप्रतिमंत्रंदशांशहवनमहंकरिष्येअष्टोत्तरशतागायत्रीर्जपाहुतिर्दद्याात्ततोबलिदानंमूर्धानंदिवो.
ऽअरेतिपूर्णाहुतिंदद्या॰ब्राह्मणायपूर्णपात्रदानं पंचकलशोदकेनयजमानस्यसपरिवारस्याऽभिषेक
द्यौःशांतिरितिमंत्रेणततोगोदानं धनिष्टाद्यधिपानांप्रीतयेतिलतैलादिदानंअमुकगोत्रस्यपितुःपयं
चकमरणोत्पन्नदुर्गतिनिवारणार्थंइमानिपंचघटानिस्वर्णप्रतिमावस्त्रफलयज्ञोपवीतयुक्तानिनानागो
त्रेभ्योब्राह्मणेभ्यःदातुमहमुत्सृजे ब्राह्मणभोजनसंकल्पंतिलकंजपकृतदक्षिणादानं अद्येत्यादिपंचक

ए० शांतिप्रतिष्ठासिद्ध्यर्थं इमांरजतमयींदक्षिणांचंद्रदैवतंनानानामगोत्रेभ्योब्राह्मणेभ्योदक्षिणांदातुम क्र०
हमुत्सृजे ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥
३० अथैकादशाहश्राद्धप्रयोगः ॥ तत्रमध्याह्नेशुचिराचांतःशुक्लद्विवासाःगोमयोपलिप्तायांभूमौआगत्य
तत्रआसनसमीपेतिलतैलेनदीपंप्रज्वाल्यगौरसर्षपान्तिलांश्चश्राद्धदेशेसान्निधापयेत्काककुक्कुटादी
न्श्राद्धहंतॄनपसारयेत् ततःपूर्वाभिमुखःकुशोदकेन अपवित्रःपवित्रोवासर्वावस्थांगतोपिवायःस्मरे
त्पुंडरिकाक्षंसबाह्याभ्यंतरःशुचिरितिपठित्वापुंडरिकाक्षःपुनाॐइतिपुंडरीकाक्षंस्मृत्वाश्राद्धिवय
स्तूनिचात्मानंचसिंचयेत् ततःकुशत्रयतिलजलान्यादायअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यप्रेत
त्वविमुक्तिकाम अद्याद्यादीनियथाकालंषोडशश्राद्धन्यहंकरिष्येइतिसंकल्पयेत् एकादशमासाभ्यंत ३०
रेऽधिमासपातेषोडशपदस्थानेसप्तदशपदंप्रयोज्यततः कुशत्रयतिलजलान्यादाय ॐअद्यामुक
गोत्रस्यपितुरमुरप्रेतस्यप्रेतत्वविमुक्तिहेतुषोडशश्राद्धांतर्गताद्यश्राद्धमहंकरिष्येइतिसंकल्पयेत्स

व्याहृतिकांसप्रणवांचगायत्रीं देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच नमःस्वाहायैस्वधायैनित्यमे
वनमोनमःइतित्रिर्जपेत् ततोऽपसव्यंकृत्वादक्षिणाभिमुखःपातितवामजानुःमोटकतिलजलान्या
दाय ॐअद्यामुकगोत्रपितरमुकप्रेतआद्यश्राद्धेइदमासनंतेमयादियतेतवोपतिष्ठतामितिमोटकरू
पमासनंतिलजलप्रोक्षितंदक्षिणाग्रमुत्सृजेत् ॐअपहताऽअसुरारक्षांᳫसिवेदिषदइतिश्राद्धदेशेवा
मावर्तेनतिलान्विकिर्यः ॐआयंतुनःपितरः सोम्पासोऽअग्निष्वातापथिभिर्देवयानैः अस्मिन्यज्ञे
स्वधयामदन्तोधिब्रुवंतुतेवन्त्वस्मान्इतिजपेत् ततोऽर्घपात्रोपरिअनखच्छिन्नंदक्षिणाग्रंपवित्रंधृत्वा
ॐशन्नोदेविरभिष्टयआपोभवन्तुपितयेसंय्योरभिस्रवंतुनःइतिमंत्रेणार्घपात्रेजलंदत्वा ॐतिलोसि
सोमदेवत्योगोसवोदेवनिर्मितः प्रत्नमद्भिःपृक्तः स्वधयापितॄल्लोकान्प्रिणाहिनः स्वाहेतितिलान्प्रक्षि
प्यगंधपुष्पेतूष्णींतत्रप्रक्षिप्प अर्घपात्रंवामहस्तेकृत्वा पवित्रंभोजनपात्रे उत्तराग्रंधृत्वा तदुपरिकिं
चिदुदकांतरंदत्वा अर्घपात्रंदक्षिणकरेणाच्छाद्य ॐयादिव्याआपःपयसासंवभूवुर्याऽअंतरिक्षाऽ

ए० नुतपार्थिवीर्याःहिरण्यवर्णायज्ञियास्ता नऽआपःशिवाःश ठं० स्योनासुहवाभवंतु इतिपठित्वा मोठ कृ०
कादीन्यादाय ॐअद्यामुकगोत्रपितरमुकप्रेतआद्यश्रद्धएषहस्तार्घस्तेमयादीयतेतवोपतिष्ठतामि
३१ तिपवित्रोपरिअर्घजलंददद्युत्सृजेत्पात्रंचवामपार्श्वे पित्रेस्थानमसीत्यर्घपात्रंसपवित्रमधोमुखंस्था
पयेत् तच्चदक्षिणादानपर्यन्तन्नचालयेत् ततःश्राद्धदेशेतिलान्विकीर्यदर्भहस्तोभूतलेप्रेतमाव्हये
त् तत्रमंत्रः इहलोकंपरित्यज्यगतोसिपरमांगतिमिति ततोमोटकादीन्यादाय ॐअद्यामुकगोत्रपि
तरमुकप्रेतआद्यश्राद्धेएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवसांसितेमयादीयते वोपतिष्ठन्ता
मितिगंधादीनुत्सृजेत् ततोजलेनभोजनपात्रासनयोश्चतुर्दिशंचतुरस्रंमंडलंकुर्यात् परकीयभूमौश्रा
द्धकरणे श्राद्धीयवस्तुषुकिंचिदुद्धृत्यतिलजलघृतयुतमन्नं ॐइदमन्नमेतद्भूस्वामिपितृभ्योनमःइति ३१
दद्यात् जीवतांभूस्वामिनांकिंचिद्दानंनिकरंदद्यात् ततःउष्णमन्नंताम्रादिपात्रेणकराभ्यामादायम
नाक्स्थित्वापितरंध्यायन् पुरुषत्रिक्षमंपरिविष्य ततइदंमधुरमिदमत्युष्णमित्यादिव्यंजनगुणानु

त्किर्तयन् घृतंसतिलजलंचपात्रांतरेषुपरिविष्यअन्नंमधुनाभिधारयेत् ॐमधुवाताऽऋतायतेमधुक्ष
रन्तिसिंधवः माध्वीर्न्नःसन्त्वोषधीः ॐमधुनक्तमुतोषसोमधुमत्पार्थिव ठं॰ रजः मधुद्यौरस्तुनः पिता
मधुमन्नोवनस्पतिर्मधुमाऽअस्तुसूर्य्यः माध्वीर्ग्गावोभवन्तुनः ॐमधुमधुमध्विति पठित्वाव्य
स्ताभ्यांपाणिभ्यांपात्रमालभ्य ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमि
स्वाहाइतिजपेत् ॐइदम्विष्णुर्विचक्रमेत्रेधानिदधेपदंसमूढमस्यपा ठं॰ सुरेइतिपठन्नमृतरूपतया
न्नंविचिंत्य ॐकृष्णकव्यमिदंरक्षमदीयामितिपठित्वा ॐइदमन्नं ॐइमापः ॐइदमाज्यं ॐइदंहवि
रितिपुनरन्नेदक्षिणकरांगुष्ठंनिवेश्य ॐअपहताऽअसुरारक्षां ठं॰ सिवेदिषदइत्पन्नोपरितिलान्प्राक्षि
प्यमोटाकादीन्यादायवामेनपाणिनापात्रमत्यजन् ॐअद्यामुकगोत्रपितरमुकप्रेतआद्यश्राद्धईदमन्नं
सोपकरणंतेमयादीयतेतवोपतिष्ठतामित्युत्सृजेत् ततःसप्रणवांसव्याहृतिकांगायत्रीं ॐमधुवाताइ
त्यादितृचं ॐमधुमधुमध्वीतिजपित्वा ॐअन्नहीनंक्रियाहीनंविधिहीनंचयद्भवेत् तत्सर्वमच्छिद्रम

स्त्वितिपठित्वा ॐकृणुष्वपाजइत्पादीन्रक्षोघ्नमंत्रान्पठित्वाभूमिंतिलैरास्तीर्य्यॐउदीरतामित्या
दिपितृमंत्रान् ॐसहस्त्रशीर्षाइत्यादिपुरुषसूक्तं ॐआशुःशिशानइत्यादि ॐनमस्तुभ्यंविरूपाक्ष

नमस्तेनेकचक्षुषे नमःपिनाकहस्तायवज्रहस्तायवैनमःइतिश्लोकमपिपठेत् अन्यानिविष्णवादि
स्तोत्राणिपठेत् ततःउच्छिष्टसन्निधौआस्तृतदक्षिणाग्रकुशात्रयांभूमिंप्रोक्ष्यसर्वप्रकारकमन्नंतिलघृ
तसहितंजलेनाप्लाव्यगृहीत्वा ॐअनाग्निदग्धायेजीवायेप्रदग्धाःकुलेमम भूमौदत्तेनतृप्यंतुतृप्तायां
तुपरांगतिमितिमंत्रेणकुशोपरितदन्नंविकिरेत् ततःसव्यंकृत्वाआचम्य हरिंस्मृत्वा अपसव्यंकृत्वा
दक्षिणाभिमुखो उच्छिष्टसन्निधौचतुरस्त्रांहस्तैकामितांदक्षिणप्लवांचतुरंगुलोच्छ्रितांवेदींनिर्माय त
न्मध्येवामहस्तेनदर्भपिंजुलीमादाय तन्मूलेनवामान्वारब्धदक्षिणकरेणप्रादेशमात्रांलिखेत् ॐअ
पहताअसुरारक्षा ठ०सिवेदिषदःइतिमंत्रेणरेखामुल्लिखेत् दर्भपिंजुलींउत्तरस्यांदिशिनिक्षिपेत् त
दुपरि ॐयेरूपाणिप्रतिमुंचमानाऽअसुराःसंतः स्वधयाचंरतिपरापुरोनिपुरोयेभरन्त्यग्निष्टान्लोका

ग्प्रणुदात्वस्मात् इत्युल्मुकंभ्रामयित्वा रेखादक्षिणतः क्षिपेत् तदुपरिउपमूलसकृल्लूनकुशान् द
क्षिणाग्रानास्तीर्य सव्यंकृत्वा ॐदेवताभ्यइतित्रिर्जपेत् ततोऽपसव्यंकृत्वा पर्णपुटकादिकमेकंति
लजलगंधपुष्पयुतंबामहस्तेकृत्वा दक्षिणहस्तेमोटकादिकमादाय ॐअद्यामुकगोत्रपितरमुकप्रेत
आद्यश्राद्धपिंडस्थानेऽत्रावनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिकुशोपरिअवनेजनंदद्यात् त
तः श्राद्धशेषमन्नंसर्वव्यंजनतिलमधुघृतयुतमेकीकृत्य तेनविल्वपरिमाणंपिण्डंनिर्माय घृतमध्वभि
घारितंकृत्वा दक्षिणहस्तेनादायमोटकादींश्चादाय ॐअद्यामुकगोत्रपितरमुकप्रेतआद्यश्राद्धेएष
पिंडस्तेमयादीयतेतवोपतिष्ठतामितिकुशोपरिअवनेजनस्थानेसव्योपगृहीतदक्षिणकरेणपिंडंदद्या
त् आस्तृतदर्भमूलेकरंप्रोक्ष्य सव्यंकृत्वा आचम्यहरिंस्मृत्वा अपसव्यंकृत्वा ॐअत्रपितर्मादय
स्वयथाभागमावृषायस्व इतिपठित्वावामावर्तेनोदङ्मुखोभूत्वामनाकृस्वासंनियम्यतेनैवसुखंपर्या
वर्तयन् पितरंभास्वरमूर्तिंध्यायन् अमीमदंतपितरोयथाभागमावृषायिषतइतिपठेत् अवनेजनाव

ए० शिष्टजलयुतपात्रंवामहस्तेकृत्वा दक्षिणहस्तेनमोटकादीन्यादाय ॐअद्यामुकगोत्रपितरमुकप्रेत कृ०
आद्यश्राद्धपिंडेऽत्रप्रत्यवनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिपिंडोपरिप्रत्यवनेजनंदद्यात् ततो
३३ नीवींविस्रंस्य सव्यंकृत्वा आचम्य हरिंस्मृत्वा अपसव्यंकृत्वा वामेनपाणिनाधृतंसूत्रंदक्षिणहस्ते
नगृहीत्वा ॐएतत्तेपितर्वासःइतिपिंडोपरिधृत्वा मोटकादिकमादाय ॐअद्यामुकगोत्रपितरमुक
प्रेत आद्यश्राद्धपिंडेएतद्वासस्तेमयादीयतेतवोपतिष्ठतामित्युत्सृजेत् तततूष्णींपिंडेगंधपुष्पधूप
दीपतांबूलानिदद्यात् ततःपिंडशेषान्नंपिंडसमीपेविकिरेत् ॐशिवाआपःसंत्वितिजलं ॐसौमनस्य
मस्त्वितिपुष्पंॐअक्षतंचारिष्टमस्त्वितितंडुलान् भोजनपात्रेनिक्षिपेत् ततोमोटकादिकामादाय
ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यआद्यश्राद्धेदत्तैतदन्नपानादिकमुपतिष्ठतांइत्युत्सृजेत् ततःस ३३
व्यंकृत्वा प्राङ मुखःकृतांजलिस्तन्मनाःसुमनाःदक्षिणांदिशंपश्यन् ॐअघोरःपितास्त्वितिपठेत्
अत्रपूर्वाग्रांजलधारांपिंडोपरिदद्यात् ततःपूर्वाभिमुखःॐगोत्रंनोवर्धतांदातारोनोभिवर्द्धन्तांवेदाः

संततिरेवच श्राद्धाचनोमाव्यगमद्बहुदेयंचनोस्तुअन्नंचनोवहुभवेदतिथींश्चलभेमहियाचितारश्चनः संतुमाचयाचिष्मकंचन एताःसत्याआशिषःसंतुइत्याशीःप्रार्थनंकुर्यात् ततोऽपसव्यंकृत्वा सपवित्रकु शत्रयंपिंडोपरिदक्षिणाग्रंधृत्वाॐउर्ज्जंवहंत्तीरमृत्तंघृतंपयःकीलालंपरिस्रुतम् स्वधास्थतर्प्पयतमेपि तरमितिदक्षिणाग्रांजलधारांसपवित्रकुशोपरिदद्यात् ततोनम्रीभूयपिंडमाघ्रायोत्थापयेत् पिंडाधा रकुशानुल्मुकंचवह्नौक्षिपेत् ततोर्घपात्रमुत्तानीकृत्य मोटकतिलजलान्यादायदक्षिणाद्रव्यंचादाय ॐ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यकृतैतदाद्यश्राद्धप्रतिष्टार्थमिदंरजतंचंद्रदैवतंअमुगोत्रायामु कशर्मणेब्राह्मणायदक्षिणांदातुमहमुत्सृजे इतिदक्षिणादानंॐअभिरम्यतामितिविसर्ज्जनम् ततःस व्यंकृत्वाॐदेवताभ्यइतित्रिर्जपेत् ततःपाणिभ्यामपसव्येनदीपंनिर्वाप्य हस्तौपादौप्रक्षाल्य सव्ये नाचम्य ॐप्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् स्मरणादेवतद्विष्णोःसंपूर्णंस्यादितिश्रुतिरिति पठित्वाविष्णुस्मरणंकुर्यात् ॐअनादिनिधनोदेवःशंखचक्रगदाधरःअक्षयःपुंडरीकाक्ष प्रेतमोक्ष

ए० प्रदोभवइतिपठेत् श्राद्धीयवस्तूनिब्राह्मणायप्रतिपादयेदंभसिवाक्षिपेत् उच्छिष्टमार्जनंकुर्यात् अ क्र०
नेनैवक्रमेणतत्रपंचदसश्राद्धानिकुर्यात्॥ अथैदशश्राद्धानि ॥ तत्रप्रयोगः रक्षादीपंप्रज्वाल्याचम्यवि
३४ ष्णुस्मरणं ॐशंखचक्रधरंदेवंद्विभुजंपीतवाससं प्रारंभेसर्वकर्माणांपुंडरीकंस्मरेद्धरिमितिध्यात्वागौर
सर्षपान्पूर्वादिदिक्षुक्षिपेत् ॐप्राच्यैनमः ॐअवाच्यै ॐप्रतीच्यै ॐउदीच्यै ॐअपवित्रः इतिपठि
त्वाकुशत्रयानीतजलैः श्राद्धवस्तूनिसिंचयेत् ततः कुशत्रयतिलजलान्यादायअमुकगोत्रस्यपितु०प्रे
तस्यसद्गतिप्राप्तिकामएकादशवैष्णवादीनिश्राद्धान्यहंकरिष्ये। इतिसंकल्पः ॐदेवताभ्यइतित्रिर्ज
पेत् ततः पिंडस्थानंनिर्मायचतुरस्राः प्रादेशमात्राएकादशवेदिकाः कुर्यात् तन्मध्येवामहस्तेदक्षिणह ३४
स्तगृहीतदर्भपिंजूलीमूलेनप्रादेशमात्रमपहतेत्यादिनोल्लिख्यदर्भपिंजूलीमुत्तरतस्त्यजेत् एवंनवरे
खाः अपसव्येनदशरेखांकृत्वापुनः सव्येनएकारेखांकुर्यात् ततः रेखोपरि ॐयेरूपाइतिमंत्रेणांगारं
भ्रामयित्वाअंगारंदक्षिणतस्त्यजेत् ततोरेखोपरिकुशत्रयंदक्षिणाग्रंप्रत्येकमास्तीर्य ॐदेवताभ्यइति

त्रिर्जपेत् ततोएकादशपुटकेजलयवगंधपुष्पाणिकृत्वा दशमपुटकेयवस्थानेतिलप्रक्षेपःदक्षिणहस्ते
नयवकुशत्रयजलान्यादायवामहस्तेपुटकमेकंगृहीत्वा अमु॰गो॰पितुरमुकप्रेतस्यस्वर्गलोकप्राप्ति
कामएकादशश्राद्धेविष्णोऽत्रावनेनिक्ष्वतेनमः १ इतिपुटकस्थजलार्द्धजलंप्रथमवेदिकाकुशोपरि
अवनेजनंदत्वाएवंद्वीतीयादिवेदिकायांचतत्राशिवअत्रावनेनिक्ष्वतेनमःयमस्य सोमराज हव्यवाहन
सोमपितृमन् रुद्ररूप मृत्यो पुरुष अपसव्यं अमु॰अमु॰एकादशश्राद्धपिंडस्थानेअत्रावनेनिष्व
तेमयादी॰मितिदशमवेदिकायामवनेजनंपुनःसव्येन ॐअद्यविष्णोअत्रावनेनिक्ष्वतेनमःएवमेका
दशस्थानेस्ववनेजनंदद्यात्ततस्तिलघृतमधुयुतेनान्नेनपिंडान्कृत्वाघृतमधुभ्यामभिघार्यएकंपिंडं
वामहस्तेकृत्वादक्षिणहस्तेनकुशयवजलान्यादायअ॰गो॰ पितुर॰एकादशोद्दिएकादशश्राद्धेविष्णो
एषतेपिंडेनमइतिवामान्वारब्धदक्षिणहस्तेनावनेजनस्थानेपिंडंदद्यात् एवंशिव यम सोमराज ह
व्यवाहन सोमपितृमन् रूद्ररूप मृत्यो रुपुष अपसव्यं एषपिंडस्तेमयादीयतेतवोपातिष्ठतां इतिद

ए० दशमंपिंडंदत्वा ततःसव्येनविष्णो०नमःएवंसर्वेषांपिंडानदत्वा ततोदर्भमूलेकरंप्रोक्ष्य आचम्य ह कृ०
रिंस्मृत्वा कुशत्रययवजलान्यादाय अ०गो०विष्णोप्रत्यवनेनमः अ०गो०एकादशश्राद्धपिंडेप्रत्य
३९ वनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतां ततोनीविविस्रंस्याचम्यवामेनपाणिनाधृतंसूत्रंदक्षिणेनादाय
उभाभ्यांपिंडोपरि ॐएतत्तेविष्णोवासइतिसूत्रंधृत्वाएवंशिवादीनामपिदशममपसव्येनएतत्तोपित
र्वासवस्त्रं ततः पिंडशेषान्नंपिंडसमीपेविकीर्य ततःएभिःपिंडदानैः अ० गो०उत्तमलोकावाप्तिर
स्तु ततः तिलसर्वौषधिदर्भान्वितंशंखंगृहीत्वा भूमौदक्षिणजानुनिपात्य ॐविष्णवेनमइतिविष्णु
पिंडेजलधारांदद्यात् एवं शिवाय यमाय सोमाय हव्यवाहनाय सोमाय रुद्राय मृत्यवे पुरुषाय
अपसव्येन पित्रापिंडे पुनसव्येनविष्णवे ततः सव्यंकृत्वा अ० गो० कृतैतद्विष्णुश्राद्धप्रतिष्ठार्थमिदं ३९
रजतंचंद्रदैवतंयथानामगोत्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजे इतिविष्णुश्राद्धदक्षिणांदद्यात् एव
मेवशिवादीनांक्रमेणसव्यापसव्याभ्यांदक्षिणांदद्यात् ततः देवताभ्यइतित्रिर्जपः ॐप्रमादादिति
जपेत् ततः पाणिभ्यांदीपंनिर्वाप्य हस्तपादप्रक्षालनमाचमनंचकुर्यात् श्राद्धीयवस्तुजलेक्षिपेत् इ

त्येकादशश्राद्धविधिः ॥ अनेनैवक्रमेणपंचघटश्राद्धानिकुर्यात् विष्णु १ ब्रह्मा २ शिव ३ यम ४ प्रेत ५ अत्रकेचित्षष्ट्युत्तरत्रिंशतपिंडदानंकुर्वंति ततः ब्राह्मणान्भोजयित्वा गृहंप्रविशेत् ततश्चाशौचांतेद्वितीयदिनेएवंयथाशक्तिमहार्हाणिरत्नानि गाः वाहनं पानानि दासीं दासं श्रेष्ठभूषणानि प्रेतहितमुद्दिश्यब्राह्मणायदद्यात् द्वादशेह्निसपिंडनश्राद्धकृत्ते षोडशश्राद्धानिएकोद्दिष्टविधिनाएकादशेह्निसमापयेत् इतिएकादशाहकृतम् विस्तरेणश्राद्धविवेकेज्ञेयम् ॥ ॥ ॥

---

यह पुस्तक फत्तेपुरवाला जालीरामपंडितमिश्र अनेक ग्रन्थावलोकनकरके संग्रह किया.

## आवृत्ति २ री.

इदं पुस्तकं संतुरामात्मजाभ्यांसुंदरमल बीजराजशर्मभ्यां मुम्बापुर्य्यां 'श्रीकल्पतरु' नाम्निमुद्रालये मुद्रितं संवत् १९४५

पुस्तकमिलनेकाठिकाणा—यहपुस्तककलकत्तेमेंगोविंदरामसागरमलकेपुस्तकालयमेंमिलेंगा. और मुंबईमें संतुरामजी सुंदरमल खेडवालब्राह्मण ठिकाणा गोपाळवाडी मुंबई

यह पुस्तक सन १८६७ के आक्ट २५ प्रमाणे रजिष्टर कियाहैं. सन १८८८.

